॥ श्रीः ॥

शास्त्रमुक्तावली—४६

# ॥ न्याय-भास्करः ॥

महीशूरपुरनिवासिना
श्रीशैलानन्तपूरुषवंश्येन विदुषां वरेण
श्रीमद्- अनन्तार्येण विरचितः,

श्रीकाञ्ची-प्रतिवादिभयङ्कर-अनन्ताचार्येण
संशोधितः,

श्रीसुदर्शनमुद्राक्षरशालायाममुद्यत ।

१९२४.

श्रीकाञ्ची ।

इदानीमेतन्मूल्यम्- १–८–०

Sasthramukthavali—46

# NYAYABHASKARA.

by

T. A. Anandalwar Swami.

Edited by

PRATIVADIBHAYANKAR ANANTACHARYAR.

Printed at

SRI SUDARSANA PRESS,

CONJEEVERAM.

1924.



Price Rs 1—8—0.

# विषयसूची ।





॥ श्रीः ॥

# ॥ प्रस्तावना ॥

ग्रन्थस्यास्य कर्ता श्रीमाननन्तार्यवर्यः श्रीमन्महीशूरराज्यान्तर्गत श्रीमण्डयनामाग्रहाराभिजनस्य कौशिकान्वयवार्धीन्दोर्महाभाष्योपपदश्रीशिङ्गलाचार्यस्य श्रीयद्वद्रिवासिन औरसः पुत्रः, मण्डयाग्रहाराभिजनस्य श्रीयदुगिरिनिवासिनो भारद्वाजश्रीमदनन्तपूरुषाचार्यवंशावतंसस्य श्रीवेङ्कटार्यगुरोर्दौत्रिमस्सुतश्च ।

१७४५ तमे शकाब्दे स्वभानुसंवत्सरे मीनमासे आश्लेषाख्यनक्षत्रे (१८२२ तमस्य ख्रिस्ताब्दस्य एप्रल्मासे). श्रीयदुगिरावस्याचार्यस्य जन्माभूत् । पितुरयं द्वितीयः पुत्रः । आदिशेषस्य प्रसादेनाऽयमजायतेति नामास्य तन्नाम्नाऽक्रियताऽनन्तार्य इति ।

शिशोरस्य सर्वलक्षणसम्पन्नतामवलोक्य, लोकोपकारम्महान्तमनेन करिष्यमाणं यशश्च सुमहदस्य लोकविस्तृतं भावि पश्यन्ती मातामह्यस्य ज्योतिष्मतीलतातैलदानेन मेधाभिवृद्धिमापादितवतीति लोकवादः ।

यथाकालमुपनयनान्तसंस्कारैस्संस्कृतोयं जनकपितुरेव सकाशे साङ्गं वेदं साहित्यशास्त्रञ्चाऽऽपञ्चदशवयोऽधीत्य षोडशे वयसि कृतपाणिग्रहण श्शास्त्राभ्यासाय महीशूरपुरीं प्रापितोभूत्पित्रा । अनेनैव कालेन साम्प्रदायिकप्रबन्धाद्यध्ययनमप्यनेन समापितमभूत् । सुगृहीतनामधेयस्य विदुषांवरेण्यस्य श्रीगूळीबाळाचार्यस्य सकाशे न्यायमीमांसादिशास्त्राण्यभ्यस्य स्वप्रतिभाविशेषेण स्वगुरूनपि विस्मापयतिस्माऽयम् । एवमध्ययनेन षड्वत्सरान्महीशूरपुर्यामुषित्वा श्रीयादवाद्रिं प्रतिनिवृत्त स्स्वजनकस्य श्रीमहाभाष्यशिङ्गलाचार्यस्य सकाश एव श्रीभाष्यभगवद्विषयादिग्रन्थाध्ययनमकरोत् ।

एकदा च श्रीयदुगिरिसम्पत्कुमारनिदाघमहोत्सवे तत्रत्यैराचार्यैर्भग वत्सन्निधौ पठ्यमानाश्चूर्णिका आकर्ण्य, भगवत्प्रेरित इव ततोपि रमणीय तरां सरळपदगुम्फितां शब्दार्थालङ्कारमण्डितां तदनुगुणपद्यसमलङ्कृतां चूर्णिकावळीं सद्य एव निर्माय सन्निहितान् भक्तजनान् समतोषयत् ।

अत्रान्तरे चास्य वैदुषीमन्यादृशीमाकर्ण्य जैनाः कंचिदेनं महीशूरराज्यान्तर्गत–श्रवणबेळगोळप्रान्तस्थे जैनमठे स्वगुरोः पाठनाय ससम्मानमनयन्नवासयंश्च तत्र । तत्रायं जैनगुरोर्ब्रह्मसूरिपण्डिताख्यस्य साहित्यन्यायादिशास्त्रपाठप्रवचनं कुर्वन्वत्सरत्रयमवसत् । तस्मिन्नेव समये रसमुरळीधर—कुवलयानन्दमकरन्द–कृष्णराजकलोदयाख्यानलङ्कारग्रन्थान्व्यरचयदयमिति किंवदन्ती, ये चाद्याऽपूर्णा एवोपलभ्यन्ते । जैनगुरोः पाठने प्रवृत्तोयं तत्रत्य सरस्वतीभण्डारस्थान् सौगतार्हतादिमतग्रन्थानवलोकयन् तेष्वपि महत्पाटवं समपादयत् ।

अथ कदाचिच्छ्रीसम्पत्कुमारमहोत्सवसमये यादवाद्रिमागतोयम्, श्रीकल्याणसरस्तीरे श्रीगजेन्द्रवरमण्डपे भगवति सम्पत्कुमारे यवनिकाम्प्रसार्याऽन्तास्तिष्ठति, श्रीमहीशूरपुरादागतं श्रीमत्परमहंसेत्यादिबिरुदाङ्कितं परकालमठाधिपतिं श्रीश्रीनिवासब्रह्मतन्त्रयतीश्वरं सपरिवारं यवनिकाया बहिरुपविष्टं स्वास्थानपण्डितान्वेदान्तवाक्यार्थविचारे प्रवर्तयन्तं स्वोपन्यस्तस्य पूर्वपक्षस्योत्तरं ततः प्रतीक्षमाणमवलोक्य, सविनयमुपसृत्य सन्निधावुपविष्टस्तदाकर्णनकुतूहली तूष्णीम्भूतोभवत् : स्वास्थानपण्डितैर्दत्तान्युत्तराण्याकर्ण्यासन्तुष्ट इव स्थिते मठाधिपतौ तस्मिन्, सत्यामाज्ञायामहं किञ्चिद्विज्ञापयाम्युत्तरमिति विज्ञापयन्, तेन दत्ताभ्यनुज्ञः, पूर्वपक्षानुवादपूर्वकं सुसङ्गतमुत्तरं सुधीरमुपन्यस्य समतोषयद्यतिराजं तम् । सचास्य वैदुषीमन्यादृशीमालोक्य सन्तुष्टस्तत्पितुरनुज्ञया स्वास्थानपण्डितेष्वन्यतमत्वेनैनं न्ययोजयदनयच्च महीशूर–पुरीम्, राजधान्यां निवसतोस्य सप्तविंशे वयसि वर्तमानस्यापि प्रतिभाविशे-

षेण वैदुष्यातिशयेन च मठीयविद्वद्गोष्ठयां राजसभायां चान्यादृशं सामर्थ्य प्रकटयतो महती कीर्तिः प्रथिताऽभूत् ।

अथ परकालयतीश्वरः परीधाविवत्सरे सह महता परिवारेण प्रातिष्ठत यात्रार्थम् ।

१. श्रीमान् अनन्तार्यः ।
२. " अ. अण्णङ्गराचार्यः ।
३. " श्वाद्रि. श्रीनिवासाचार्यः ।
४. " सञ्जयाचार्यः ।
५. " औ. राघवाचार्यः ।
६. " मडकशीरियं. अय्यङ्गार्यः ।

इत्यादयो विद्वांसस्तत्परिवारान्तर्गता अभूवन् । क्रमेण च धारवाडनगरं प्रापद्यतीश्वरः । तत्र माण्डलिकन्यायाधिकार्यभूच्छ्रीमान् श्रीवेङ्कटरायः । तादात्विकनियमानुसारेण श्रीमान्पण्डितश्रीरघुनाथशास्त्री न्यायाधिकरणकपण्डित पदमलमकरोत् । अयमेव गादाधर्या न्यायरत्नाख्यव्याख्याकर्ता । प्राचीनशास्त्रवादकुतूहली स न्यायाधिकारी स्वभवने कामपि वादगोष्ठीं प्रावर्तयत् । बहवश्च पण्डितास्तत्र सम्मिळिता अभूवन् । लक्ष्मीश्वरग्रामवासिनौ वाई. बाळाचार्यपुत्रौ हयग्रीवाचार्यबाळाचार्यौ न्यायशास्त्रनिपुणौ, तथा तस्यैव बाळाचार्यस्यानुज स्सुप्रसिद्धो धारवाडन्यायाधिकरणपण्डितो राघवेंद्राचार्यश्च सभायामभूवन् । प्रावर्तत च वाक्यार्थविचारो न्यायरत्नकर्त्रा रघुनाथशास्त्रिणा सह गादाधर्यां तृतीयनथप्रकरणे । विशिष्टान्तराघटितत्वविचारे गदाधरेण प्रदर्शिताया बाधविशिष्टव्यभिचारेऽतिव्याप्तेरनवकाश इति पूर्वपक्षं प्रावर्तयत् न्यायरत्नकर्ता परिष्करणपूर्वकम् । वाजि बाळाचार्यपुत्रौ तु पूर्वपक्षपरिष्कारोयमसङ्गत इति तत्खण्डनमकुरुताम् । अनन्तार्यश्च तत्खण्डनप्रकारमनुवादपूर्वकमत्यन्तनैपुणीमन्यादृशीं प्रदर्शयन्नुपन्यस्य तदुत्तरदानाय रघुनाथशास्त्रिणे

दत्तवान् । अनुवादप्रकारमिम मत्यद्भुतमभूतपूर्वं श्रुत्वा सर्वेपि विस्मिता अभूवन् । रघुनाथशास्त्री च स्वपक्षसमर्थनेऽसमर्थ एवाभवत् । अनन्तार्यश्च सभायामस्यां विशेषत स्सम्मानितोभूत्परकालयतीन्द्रश्च परं प्रहृष्टः ।

अस्यामेव यात्रायां पुण्यपत्तन [पूना] प्रान्ते मोहनशास्त्री ( मोहूर्-शास्त्री ) इति प्रसिद्धः पण्डितो बहूनि दिनान्यनन्तार्येण वादं कुर्वन्पराजितोभूदिति कथयन्ति विद्वद्वराः ।

तत्र विधवाविवाहविचारप्रसङ्गे तत्खण्डनपर माचारलोचनाख्यं कमपि प्रबन्धं विरचितवानयमाचार्यः । आन्ध्राक्षरैर्मुद्रितः प्रकाशितश्चायं प्रबन्धोऽनन्तार्येणैव ।

किञ्च, पुण्यपत्तनप्रान्ते सन्न्यासिनां त्रिदण्डधारणम्, शिखायज्ञोपवीत धारणम्, तथा तप्तचक्राङ्कनं चाधिकृत्य बहवो विवादा अभूवन् । तेषु सर्वत्र विजयी भवन्नयमनन्तार्य :प्रसिद्धिमान्यादृशीं प्रापत् । मोहनशास्त्रिपराजयविषयकाः श्लोका अद्यापि परकालमठे संरक्ष्यन्त इत्यवगम्यते ।

अत्रान्तरे महीशूरराज्याधिनाथेन श्रीकृष्णराजेन्द्रेण स्वषष्टिपूर्तिसमये राजधान्यां सन्निधानं प्रार्थितःश्रीपरकालमठाधिपः प्रतिन्यवर्तत महीशूरपुरीमानन्दवत्सरे सपरिवारः ।

महाराजश्चानन्तार्यस्यान्यादृशीं वैदुषीमाकर्ण्य प्रमुदितस्तं राजसभायां विद्वन्मण्डल्याः प्रधानपदे न्यवेशयत्ससम्मानम् ।

कुणिगलूरामशास्त्री नाम कश्चित्प्रसिद्धो विद्वान् सह च्छात्रैर्यात्रां कुर्वन्, काञ्चीपुर्यां शैववैष्णववादप्रसङ्गे नारायणशब्दस्य शिवपरतां स्थापयितुं प्रयतमानो " नवकोटि " नामकं कमप्युपन्यासं सभायां कुर्वन् प्रबन्धरूपेणापि तं प्रकाश्य प्रसिद्धिं प्राप्नोदिति समाकर्ण्य तद्ग्रन्थखण्डनपरं " णत्व तत्वविभूषणम् " नाम प्रबन्धं विलिख्य, शालिवाहनशकाब्दे १७७८ तमे चेन्नपुर्यामान्ध्राक्षरैस्सम्मुद्र्य प्राकाशयत् ।

अथ स रामशास्त्री महीशूरपुरीं प्राप्य राजसम्मानितस्तत्रैवावसद्विरचितवांश्च न्यायशास्त्रसम्बद्धं सत्प्रतिपक्षशतकोट्याख्यं कमपि प्रबन्धम् । तस्य ग्रन्थस्य खण्डनरूपं चतुश्शतकोट्याख्यं प्रबन्धमनन्तार्यो नचिरादेव व्यरचयत् । एवं स्वीयस्य प्रबन्धद्वयस्य खण्डनमनन्तार्येण कृतमवलोक्य खिन्नोपि रामशास्त्री तूष्णीम्भूत एवावर्तत ।

अथायमाचार्यो मायावादिनां प्रधानतमस्य ग्रन्थस्य ब्रह्मानन्दीयव्याख्यासहितस्याद्वैतसिद्धिनाम्नः खण्डनरूपं न्यायभास्कराख्यं प्रबन्धं विरचितवान्. १७८१ तमे शकाब्दे चेन्नपुर्यामयं मुद्रितः प्रकाशितश्चाभूदान्ध्राक्षरैः। अतिगहनतर्कबहुळस्याऽद्वैतसिद्धिसहितब्रह्मानन्दीयस्य खण्डनं रामशास्त्रिणो महान्तमेव मनः क्लेशमुदपादयदिति किंवदन्ती, नचिरादेव च शास्त्री दिवमप्यगात् ।

रामशास्त्रिमरणानन्तरं तच्छिष्यास्स्वमतग्रन्थखण्डनकारिण आचार्यस्य केनापि प्रकारेण पराभवं कर्तुकामा महान्तं प्रयत्नमारचयन् । राजसभायां वादगोष्ठीं प्रवर्त्य तत्रास्य पराभवं कर्तुकामा महाराजं प्रोत्साह्य सभायामागमनाय राजाज्ञामनन्तार्याय प्रेरयन्तस्स्वयं च बहुसंख्यास्ते कृतसङ्केता अभूवन् । अनन्तार्योपि राजाज्ञां मानयन् स्वप्रबन्धप्रकाशनस्य सुसमयोयं प्राप्त इति हृष्यंश्च क्लृप्ते समये सभां प्राविशत् ।

रौद्रिसंवत्सरे गणेशचतुर्थीसमये श्रीकृष्णराजेन्द्रसभायां वाक्यार्थविचारः प्रावर्तत । तत्र कश्चिद्रामशास्त्रिशिष्यो न्यायभास्करोक्तानर्थानसङ्गतान् साधयितुकामः कमपि पूर्वपक्षम्प्रावर्तयत् । अथ तत्पक्षीय एव कोपि विद्वान् स्वपाण्डित्यप्रकाशनकामः पूर्वपक्षस्यासङ्गततां समर्थयितुमारभत । एवं तयोः पूर्वपक्षप्रकारसमर्थनखण्डनपरयो महति विवादे प्रवर्तमानेऽर्धरात्रसमये चातीते महाराजस्तद्दिवसीयसभां विसर्जयन् श्वः प्रवर्ततां विचारः पुनरपीत्याह । परदिने च यथासमयं सभा प्रावर्तत । पूर्वदिनीयविवादशेष एव

पुनरारभ्यत। बहु प्रयतमानोपि पूर्वपक्षोद्भावकस्स्वपक्षसमर्थनेऽसमर्थ एवाभवत्। विद्वांसश्च तत्रस्थाः पूर्वपक्ष एवासङ्गत इति निरधारयन्। महाराजोपि तमिमं निर्णयमन्वमोदत, अनन्तार्यस्य सामर्थ्यविशेषं प्रशंसन्वि शेषतश्च सममानयदेनम्।

अथायमाचार्यः श्रीभाष्योक्तसिद्धान्तसमर्थनपरान् बहून्वादग्रन्थानरचयत्। सिद्धान्तसिद्धाञ्जनग्रन्थ एवास्य कृतिष्वन्तिम इत्यवगम्यते, यतोयमपूर्ण एवोपलभ्यते। बहवश्च शिष्या अस्याभवन्।

इत्थं सुमहतीं प्रथां प्राप्य, महाराजसभाया महत्पदं प्राप्य बहूंश्च ग्रन्थान्विरच्य श्रीवैष्णवसिद्धान्तस्य महान्तं प्रचारमाधाय, लोकोपकारं सुबहु कृत्वा; चत्वारिंशे वयसि रुधिरोद्गारिसंवत्सरे ज्येष्ठशुक्लचतुर्दश्यां परं पदं प्रायात्।

१. अस्य शिष्येषु सर्वप्रथमः श्री. उ. शुद्धसत्त्वं रामानुजाचार्यः। अयमेव महानुभावस्सन्न्यासाश्रमं परिगृह्य पुळियङ्गुडिजीयर इति प्रसिद्धिं प्राप्तो योगिवरोभूत्।

२. श्रीरङ्गम्—उञ्छवृत्तिस्वामी,

३. मधुरै—रामस्वाम्यय्यङ्गार्यः,

४. मामण्डूर—विजयराघवाचार्यः,

५. कार्पङ्गाड्ड—रामानुजाचार्यः,

६. चेन्नसमुद्रं—श्रीरङ्गाचार्यः,

७. नवीनं–कृष्णाचार्यः,

८. नवीनं–रामानुजाचार्यः, धर्माधिकारी वर्तमानः।

एवमन्ये च बहवश्शिष्या अस्याभूवन्।

नास्त्यस्य कोप्यौरसः पुत्रः, एका कन्याऽस्य प्रीतिपात्रमभूत्। परमपदयात्रासमये गर्भिण्यास्तस्या भावी पुत्र एवाचार्येण पुत्रत्वेन मनसि चि—न्तितः, पश्चात्स्वीकृतो दत्तपुत्रत्वेनाऽनन्तार्यो नामाऽद्य चेन्नपुर्यां वर्तते।

अनेन गुरुवरेण प्रणीतेषु ग्रन्थेष्वद्ययावदेते मुद्रिताः—

१. णत्वतत्त्वविभूषणम्, शा-श १७७८ आन्ध्राक्षरैर्मुद्रितः ।

२. शतकोटिखण्डनम्, [१८१५

३. न्यायभास्करः, चेन्नपुर्यां शा-श १७८१ (आ) महीशूरपुर्यां शा-श

४. आचारलोचनम्, विधवाविवाहखण्डनरूपम् ।

५. शास्त्रारम्भसमर्थनम् । नागराक्षरैः

६. समासवादः ।

७. विषयतावादः ।

८. ब्रह्मपदशक्तिवादः ।

९. शास्त्रैक्यवादः ।

१०. मोक्षकारणतावादः ।

११. निर्विशेषप्रमाणव्युदासः ।

१२. संविन्नानात्वसमर्थनम् ।

१३. ज्ञानयाथार्थ्यवादः ।

१४. ब्रह्मलक्षणवादः ।

१५. ईक्षत्यधिकरणविचारः ।

१६. प्रतिज्ञावादः ।

१७. आकाशाधिकरणविचारः ।

१८. श्रीभाष्यभावाङ्कुरः ।

१९. लघुसामानाधिकरण्यवादः ।

२०. गुरुसामानाधिकरण्यवादः ।

२१. शरीरवादः ।

२२. सिद्धान्तसिद्धाञ्जनम् ।

२३. विधिसुधाकरः ।

२४. सुदर्शनसुरद्रुमः ।

२५. भेदवादः ।

२६. तत्क्रतुन्यायविचारः ।

२७. दृश्यत्वानुमाननिरासः ।

[ अमुद्रितास्तु—रसमुरळीधरः, कुवलयानन्दमकरन्दः, कृष्णराज कळोदयः, चूर्णिकाः, इत्यादयः ।

न्यायभास्करग्रन्थोयमान्ध्राक्षरैर्द्विर्मुद्रितोप्यशुद्धिबहुळ एवासीदिति, देवनागराक्षरैर्मुद्रणमारभ्यताऽस्माभिः । ग्रन्थकर्तुस्स्वहस्तलिखिते पुस्तके मुद्रितपुस्तकेऽनुपलब्धानि कानिचनात्युपयुक्तानि वाक्यान्यासन्, तानि च श्रीयदुगिरिकृतवासेन श्रीवैकुण्ठवासिना विद्वद्वरेण स्थानीकं श्री. कुप्पनय्य ङ्गार्येण सम्पादितान्यस्मभ्यं दत्तानि मध्येमध्ये संयोजितानि सन्त्यद्येति विशेषोऽयमस्य मुद्रणस्य । तैश्च वाक्यैस्संयोजितैर्बहुचरशङ्का निवारिता भवन्तीति तेषां संयोजनं प्रयत्नेनाकार्यस्माभिः ।

ग्रन्थकर्तुरनन्तार्यस्यचरित्रमस्माभिर्बेङ्गळूरुनगरवासिना करिकिसिंहेन ग्रन्थकर्तृभागिनेयेन आशुकविना विदुषा नरसिंहार्येण लिखिताद्विस्तृताच्चरित्रात्संगृहीतमिति सकार्तज्ञं प्रकाशयामः ।

ग्रन्थकर्तुराचार्यस्य छायाचित्रमस्माभिस्तत्पुत्रस्य चेन्नपुरीवासिनोऽनन्तार्यस्य सकाशात्प्राप्तमिति तस्योपकारं चिरं स्मरिष्यामः ।

इति—सम्पादकः ।



श्रीरस्तु ।

श्रीहयग्रीवाय नमः ।

# शास्त्रमुक्तावळी ।

# न्यायभास्करः ।

कला काचित्कान्त्या जलदरुचिमालासहचरी
जगज्जन्मस्थेमप्रळयमयलीलाद्भुतरसा ।
श्रुतिश्रेणीसिद्धा निखिलगुणरत्नाकरतया
यदुक्ष्माभृद्भागे विलसति जनन्या त्रिजगताम् ॥

यदद्रीशनखाङ्कुरद्युतिझरीस्वर्लोककल्लोलिनी
संसारानलतापलोपकलने प्रौढिं समाढौकताम् ।
यत्रेन्द्रादिमुखावळी परिलसत्पाथोजमालायते
चित्रा तत्र च यज्ञमौळिविततिर्हंसप्रपञ्चायते ॥

कलशजलधिकन्यापादपाथोरुहाभ्यां
सुरपतिमकुटोद्यत्कान्तिकिञ्जल्किताभ्याम् ।
अनवरतधृताभ्याम्मूर्ध्नि वाण्या पुराण्या
परमिह भुवनानाम्मङ्गळं नैव जाने ॥

निगमान्तजलधिचन्द्रो निर्मलगुणनिलयलक्ष्मणमुनीन्द्रः ।
दद्याच्छुभान्यतन्द्रो निस्तुलमहिमा दयासान्द्रः ॥

अरन्ध्रसद्वृत्तमणीमनन्तगुणगुम्भिताम् ।
अपूर्वमालां मन्येहं पूर्वाचार्यपरम्पराम् ॥
शेषार्यवंशवार्धीन्दुरनन्ताचार्यकोविदः ।
करोति विदुषां प्रीत्यै कुतुकान्न्यायभास्करम् ॥

अत्राद्वैतवादिनो वदन्ति--अनुमानागमादिभिर्जगतो मिथ्यात्वं सिध्यतीति। (तत्रादौ केचिद्विप्रतिपत्तिं प्रदर्शयन्ति "ब्रह्मप्रमातिरिक्ताबाध्यत्वे सति सत्त्वेन प्रतीत्यर्हं चिद्भिन्नं प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगि नवा, पारमार्थिकत्वाकारेणोक्तनिषेधप्रतियोगि नवा." इति; तदिदमयुक्तम् , संशयस्य पक्षतात्वाभावेन सिषाधयिषाविरहविशिष्टसिध्यभावस्यैव पक्षतात्वेन संशयसम्पादकविप्रतिपत्तेरनुपयोगात् । यत्तु " विप्रतिपत्तिजन्यसंशयस्य व्युदसनीयतया विचाराङ्गत्वात्तदावश्यकता ; व्युदसनीयतया विचाराङ्गत्वं च विचारसाध्याभावप्रतियोगितया विचाराङ्गत्वम् ; विचारप्रवृत्त्युपयुक्तसंशयाभावरूपफलज्ञानस्य विशेषणज्ञानविधया कारणज्ञाने विषयत्वमिति यावत् ; तथाच विप्रतिपत्तिवाक्यात्संशये जाते सन्देह्मीत्याकारेण संशयरूपविशेषणज्ञानेन संशयाभावरूपफलज्ञानाधीनेच्छया विचारे प्रवृत्तिरित्येवंरीत्या विचारे विप्रतिपत्तेरुपयोगः ; नच प्राचीनमते विप्रतिपत्तिवाक्यस्य संशयात्मकशाब्दबोधहेतुत्वेपि प्रत्यक्षस्यैव संशयत्वमिति नवीनमते स्वघटकपदज्ञानजन्यकोट्युपस्थितिद्वारा तद्वाक्यस्य संशयहेतुत्वेपि वादिनो निश्चयकाले तद्वाक्यात् संशयो न जायत इति तद्दशायां फलीभूतसंशयाभावप्रविष्टविशेषणज्ञानानिर्वाह इति वाच्यम् ,– तद्दशायां संशयकारणत्वादिरूपेण ज्ञाता विप्रतिपत्तिस्संशयं स्मारयति, ययोस्सम्बन्धः पूर्वं गृहीतस्तयोरेकज्ञानस्यापरस्मारकत्वात् , तदा स्मरणरूपसंशयज्ञानसम्पादकतया विप्रतिपत्तेरुपयोग" इति;– तन्न, अभावबुद्धौ प्रतियोगिज्ञानमात्रस्य कारणत्वेन विप्रतिपत्तिं विना संशयानुत्पत्तेस्तत्प्रत्यक्षासम्भवेपि तद्विषयकेपरोक्षज्ञानादेव संशयाभावरूपफलज्ञानसम्भवेन प्रवृत्त्युपपत्तेः । नच संशयविषयकपरोक्षज्ञानस्य कारणाभावादसम्भवः, मध्यस्थज्ञानादिना तन्मूलसंशयानुमानसम्भवात् । एवं "व्युदसनीयतये'त्यस्येष्टतावच्छेदकीभूतभेदप्रतियोगितयेत्यर्थः, संशयान्यमिथ्यात्वज्ञानत्वं हीष्टतावच्छेदकम् , तत्प्रकारकज्ञानस्योक्तरीत्या विप्रतिपत्त्यधीनसंशयापेक्षत्वात्तदावश्यकते" ति गुरुचन्द्रिकोक्तमपि परास्तम् ; उक्तरीत्या संशयविषयपरोक्षज्ञानादेवोपपत्तेः ।)

विमतं मिथ्या दृश्यत्वाज्जडत्वात्परिच्छिन्नत्वाच्छुक्तिरूप्यवदिति तावन्मिथ्यात्वसाधकमनुमानम् । तत्र च विमतमिति पक्षग्रहणमयुक्तम्, विमतत्वस्य संशयविषयत्वरूपस्य विषयतासम्बन्धेन संशयरूपस्य वा पक्षतावच्छेदकत्वे अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे ब्रह्मतुच्छयोर्बाधात् । विषयत्वमात्रस्य पक्षतावच्छेदकत्वसम्भवे तत्र संशयनिरूपितत्वविशेषणस्य व्यर्थत्वात् । विषयतासम्बन्धेन संशयस्य पक्षतावच्छेदकताकल्पे संशयत्वघटकज्ञानत्वातिरिक्तभागवैयर्थ्याच्च । अत एव सामानाधिकरण्येन साध्यतापक्षोपि निरस्तः ।

यत्तु " विमतपदं विमतिविशेषविषयतावच्छेदकावच्छिन्नपरम् । तथा च विमतिविशेषविषयतावच्छेदकीभूतं ब्रह्मप्रमातिरिक्ताबाध्यत्वे सति सत्तादात्म्यवत्त्वे सति चिद्भिन्नत्वमेव पक्षतावच्छेदकम् । अत्र चावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे सामानाधिकरण्येन साध्यसिद्धावपि सिद्ध साधनमिति मते शुक्तिरूप्यादौ तद्वारणाय प्रथमं सत्यन्तम् । तुच्छे बाधवारणाय द्वितीयं सत्यन्तम् । ब्रह्मणि बाधवारणाय विशेष्यम् । उक्तं हि दीधितिटीकायाम् ' अत एवातिप्राचीना अवच्छेदकावच्छेदेनानुमितावप्यंशतस्सिद्धसाधनस्य दोषत्वमङ्गीकुर्वन्तो ध्वनिव्यावर्तनाय शब्दानित्यतानुमाने वर्णात्मकत्वं पक्षे निवेशयन्ती ' ति । यदि च पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे सामानाधिकरण्येन साध्यसिध्या न सिद्धसाधनमिति नव्यमतमाद्रियते, तदा तथोद्देश्यतायां ब्रह्मप्रमातिरिक्तेत्यादि प्रथमविशेषणं नोपादेयम्, इतरविशेषणद्वयं तु तुच्छे ब्रह्मणि च बाधवारणायोपादेयमेव । सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे तु ब्रह्मप्रमातिरिक्ताबाध्यत्वमेकमेव पक्षविशेषणम् । "इति;— तन्न, प्रपञ्चसत्यत्व वादिभिः कैरप्यनिर्वचनीयस्य शुक्तिरूप्यस्योत्पत्त्यनभ्युपगमेन सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वेपि सिद्धसाधनानवतारेण प्रथमविशेषण वैयर्थ्यात् । भट्टभास्करादिभिश्शुक्तौ सत्यस्यैव रजतस्योत्पत्तिस्वीकारेण

तन्मते मिथ्यात्वासिध्या सिद्धसाधनानवतारात् । वादिरीत्या सिद्धसाधनस्य दोषत्वे अनुमानमात्रोच्छेदापत्त्या प्रतिवादिमत एव तस्य वक्तव्यत्वात् ।

यदपि "भट्टभास्करानुयायिना केन चिद्यदि तस्य मिथ्यात्वमुच्यते तदा तेन सह विवाददशायां तादृशविशेषणं सार्थकम्; यद्वा शुक्तिरूप्यमिथ्यात्ववादिनो भट्टभास्करानुयायिनः कस्यचिदभावेपि न क्षतिः, ये सर्वमेव सत्यमिति वदन्ति तान्प्रति दृष्टान्तसिद्ध्यर्थं शुक्तिरूप्ये मिथ्यात्वं प्रथमं प्रसाध्य तद्भिन्ने मिथ्यात्वमुक्तानुमानेन साधनीयमिति शुक्तिरूप्ये सिद्धसाधनं स्यादिति तद्वारकतयोक्तविशेषणं सार्थकम्।" इति; तन्न, कंचन वादिनं प्रकल्प्य प्रकल्पितवादिमते सिद्धसाधनवारकतयोक्तविशेषण सार्थक्ये ब्रह्मप्रमातिरिक्ताबाध्यभूतमिथ्याभूतरजतवादिनोपि कल्पनसम्भवेन तन्मते सिद्धसाधनवारणार्थं विशेषणान्तरदानप्रसङ्गेनानवस्थापातात्; तादृशविशेषणान्तरविशिष्टस्यापि मिथ्याभूतरजतस्य केन चित्कल्पितेन वादिनाङ्गीकारकल्पनसम्भवात् । यद्वेत्यादिना सार्थक्योपपादनमप्ययुक्तम्, प्रातिभासिकस्य चिद्भेदस्य ब्रह्मण्यपि सम्भवेन स्वसमानसत्ताकचिद्भेदवत्त्वस्यैव चिद्भिन्नत्वमित्यनेन विवक्षणीयतया प्रातिभासिकेपि चिद्भेदस्य व्यावहारिकत्वेन स्वसमानसत्ताकचिद्भेदवत्त्वरूपपक्षतावच्छेदकाक्रान्तत्वाभावादेव तद्वारणात् । अभावस्याधिकरणस्वरूपतापक्षे सिद्धसाधनसम्भवेपि इदं रजतं ब्रह्मप्रमातिरिक्ताबाध्यमिति भ्रमे तादृशाबाध्यत्वविशिष्टरजतस्यैवानिर्वचनीयस्योत्पत्त्या उक्तविशेषणेन तादृशरजतावारणादुक्तसिद्धसाधनस्य दुर्वारता । नचोक्तभ्रमे तादृशाबाध्यत्वविशिष्टस्य शुक्त्यादेरेव तादात्म्येन भानं- नतु विशिष्टरजतोत्पत्तिरिति नोक्तदोष इति वाच्यम्, 'अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्ये' त्यध्यासभाष्यरीत्या तादात्म्येन धर्म्यध्यासस्थले धर्मसंसर्गाध्यासस्यापि भवद्भिरभ्युपगतत्वेन तादृशाबाध्यस्य तादात्म्येनाध्यासे तादृशाबाध्यत्वसंसर्गस्याप्यध्यासावश्यकतया उक्तविशेषणेन तादृशरजतावारणात् । नचेदं रजतं ब्रह्मप्रमातिरिक्ता

बाध्यमिति भ्रमस्यापरोक्षत्वासम्भवात्परोक्षत्वमेव वाच्यम्, तथाच परोक्षे अन्यथाख्यातेरेव स्वीकारात्तादृशप्रातिभासिकानङ्गीकारान्नोक्तसिद्धसाधनावकाश इति वाच्यम्; परोक्षे अन्यथाख्यातिस्वीकारे तादृशान्यथाख्यातिनिरूपितविषयतानां चित्तादात्म्यरूपाणां विशेष्यताप्रकारतारूपत्वासम्भवात् । नहि भवद्भिर्विशेष्यतात्वप्रकारतात्वादिकं तार्किकादिमत इवाखण्डोपाधिरूपमभ्युपगम्यते, परस्परावच्छेद्यावच्छेदकभावापन्नचित्तादात्म्यानामेव प्रकारताविशेष्यतादिरूपत्वात् । तथाहि– एकस्यां सर्वदृश्यतादात्म्यापन्नचिद्व्यक्तौ शुक्त्यादितादात्म्यावच्छेदेन रजतादितादात्म्यं घटादितादात्म्यावच्छेदेन तदभावश्च वर्तते, वृक्षे अग्रमूलाद्यवच्छेदेन संयोगतदभाववत्, अग्रे वृक्षस्संयोगीत्यग्रावच्छेदेन वृक्षे संयोगानुभववदिदं रजतं जानामीत्यनुभवेन इदंचित्तादात्म्यावच्छेदेन रजतचित्तादात्म्यभानात्; तत्रावच्छेदकीभूतचित्तादात्म्यं विशेष्यता, अवच्छेद्यचित्तादात्म्यं च प्रकारतेति भवत्सिद्धान्तात । परोक्षे अन्यथाख्यातिस्वीकारे ह्रदो वह्निमानित्यनुमितेर्ह्रदविशेष्यत्वावच्छिन्नवह्निप्रकारताकत्वानुपपत्तिः, ह्रदवह्निभ्यां ये चितस्तादात्म्ये तयोरेव विशेष्यताप्रकारतारूपतानिर्वाहाय मिथोवच्छेद्यावच्छेदकभावस्य वाच्यत्वेन ह्रदतादात्म्यावच्छेदेन चिति तादात्म्येन वह्नेरनुत्पत्तौ तयोर्भिन्नदेशत्वेनावच्छेद्यावच्छेदकभावासम्भवात । उक्तयुक्त्यैव परोक्षभ्रमे ऽप्यनिर्वचनीयार्थस्साधितो ऽद्वैतसिद्धौ जडत्वनिरुक्तौ— "इदं रजतमहं जानामीत्यनुसन्धीयमानं यज्ज्ञानविषयत्वं तस्याश्रयान्तरानुपपत्त्या ऽनिर्वचनीयार्थसिद्धेर्वक्ष्यमाणत्वात् । अतएव परोक्षभ्रमे ऽप्यनिर्वचनीयार्थसिद्धिरि" ति । व्याख्यातं चेदं लघुचन्द्रिकायां "देशान्तरस्थस्य रजतादेर्भ्रमे भाने तदीयचित्तादात्म्ये इदंचित्तादात्म्यावच्छिन्नत्वासम्भवेन शुक्त्याद्यवच्छिन्नचिति रजताद्युत्पत्तिः स्वीक्रियत इति भाव" इति ।

अत एव "अज्ञानं द्विविधं – असत्त्वापादकमभानापादकं चेति, अत्राद्यं परोक्षापरोक्षसाधारणधीमात्रनाश्यमन्तःकरणावच्छिन्नसाक्षिचैतन्य-

निष्ठम्, द्वितीयं चापरोक्षज्ञाननाश्यं विषयावच्छिन्नब्रह्मचैतन्यनिष्ठ" मिति सिद्धिकारमतमपास्तम्, असत्त्वापादकाज्ञानस्य विषयावच्छिन्नचैतन्यनिष्ठत्वाभावे तत्परिणामभूतवह्न्यादेर्ह्रदावच्छिन्नचित्यनुत्पत्त्या ह्रदो वह्निमानित्यनुमितेर्ह्रदांशे वह्निप्रकारकत्वानुपपत्तेः ।

ब्रह्मानन्दादिभिस्तूक्तानुपपत्त्या द्विविधमप्यज्ञानं विषयावच्छिन्नचिन्निष्ठमेव स्वीकृतमित्यलं प्रसङ्गिकेन ।

किंच - ब्रह्मण्यारोपितध्वंसप्रतियोगित्वादौ सिद्धसाधनं दुर्वारम्, ब्रह्मणो भवन्मते षडिन्द्रियवेद्यत्वेन ब्रह्म ध्वंसप्रतियोगीति भ्रमस्यापरोक्षरूपताया अपि सम्भवात् - तादृशप्रतिभासिकस्य ध्वंसप्रतियोगित्वाभावप्रकारकब्रह्मज्ञानबाध्यतया तदतिरिक्ताबाध्यत्वात्। यत्तु "ब्रह्मान्यविषयकज्ञानाबाध्यत्वमेवोक्तविशेषणार्थः, तथाच ध्वंसप्रतियोगित्वादेर्ब्रह्मान्यध्वंसप्रतियोगित्वाभावविषयकज्ञानबाध्यत्वाद्वारणमि"ति; तन्न, तथासत्याश्रयासिध्यापत्तेः; प्रपञ्चस्य ब्रह्मान्यविषयकज्ञानबाध्यत्वात्। अध्यस्तं प्रत्यधिष्ठानसाक्षात्कारत्वेनैव बाधकत्वेन इयं शुक्तिरयं घट इत्यादिसमूहालम्बनस्य शुक्तिरूप्यबाधकतावदहं ब्रह्म घटो विनाशीत्यादि समूहालम्बनस्यापि प्रपञ्चबाधकत्वे बाधकाभावात्। नहि शुक्तिरूप्यादिस्थले अधिष्ठानान्याविषयकज्ञानस्यैव बाधकत्वमिति सम्भवति, इयं शुक्तिरित्यसमूहालम्बनस्यापि चाक्षुषस्य शुक्तित्वतत्समानाधिकरणसंख्यापरिमाणादिविषयकत्वेनाबाधकत्वप्रसङ्गात् । नच ब्रह्मसाक्षात्कारत्वेन प्रपञ्चबाधकत्वे अहमज्ञ इत्यादिरूपस्येदानीन्तनस्यापि ब्रह्मसाक्षात्कारस्य बाधकतापत्तिरिति ब्रह्मान्याविषयकत्वं बाधकतावच्छेदके निवेश्यमिति वाच्यम्, जातित्वेन शुक्तित्वावगाहिन इयं जातिमतीति ज्ञानस्य शुक्तिरूप्यबाधकतावारणाय निरवच्छिन्नशुक्तित्वविषयतानिरूपितविषयताशालिज्ञानत्वेन बाधकतावत् अज्ञानादिविशिष्टब्रह्मज्ञानस्य प्रपञ्चबाधकतावारणायेतरविषयत्वानिरूपितात्मविषयताशालिज्ञानत्वेन बाध-

कताया वक्तव्यत्वात् । नच लाघवादज्ञानादिविशिष्टात्मज्ञान वारणाय बाधकतावच्छेदककोटौ ब्रह्मान्याविषयकत्वनिवेशनं युक्त मिति वाच्यम्, तथासत्यात्मविषयकनिर्विकल्पकस्येव तादात्म्यसम्ब न्धेनात्मप्रकारकात्मविशेष्यकज्ञानस्यापि बाधकताया दुर्वारत्वात्; तस्या प्यात्मान्याविषयकत्वरूपबाधकतावच्छेदकाक्रान्तत्वात् । समूहालम्बना त्मकस्य पूर्वोक्तब्रह्मसाक्षात्कारस्याबाधकत्वप्रसङ्गाच्च; विद्यारण्यादिभिस्स मूहालम्बनज्ञानस्यापि बाधकत्वाङ्गीकारात् । उक्तं च तैर्ध्यानदीपिकायां- "न बुद्धिं मर्दयन् दृष्टो घटतत्वस्य वेदिता। उपमृद्गाति चेद्बुद्धिं ध्यातासौ न तु तत्वविदि" ति । तत्वज्ञानस्येतरविषयकत्वराहित्याय बुद्धिमर्दनं नापेक्ष्यते, इतराविषयकस्यापि तत्वविषयकत्वसम्भवात्, ध्याने तु वि जातीयधीरहितसजातीयधीप्रवाहरूपे तदपेक्ष्यत इति तदर्थः ।

यत्तु "तार्किकादिमते यथा घटो न घट इत्यादिज्ञानमाहार्यत्वान्न ज्ञानान्तर विरोधि तथा मन्मतेप्युक्तसमूहालम्बनमाहार्यत्वान्न प्रपञ्चबाधकम्, घटतदभाव विषयतयोरिव द्वैताद्वैतविषयत्वयोरनाहार्यज्ञाने विरुद्धत्वात्; अथ विशेष्यता वच्छेदकतासम्बन्धेन घटभेदप्रकारकानाहार्यज्ञानोत्पत्तौ घटत्वनिष्ठविषयता सम्बन्धेन ज्ञानस्य प्रतिबन्धकत्वादाद्ययोर्विषयतयोर्युक्तस्तादृशो देशवि रोधः, अन्त्ययोस्तु कुत इति चेत्? अद्वैतत्वेन ब्रह्मज्ञानोत्तरमेवाहं ब्रह्मेति ज्ञानस्योत्पत्तेस्तत्काले अद्वैतत्वेन ब्रह्मण उद्बुद्धसंस्कारसत्त्वेन तस्यैव द्वैतधीविरोधित्वेनान्त्ययोरपि तयोरुक्तविरोधस्य युक्तत्वात्; शुक्तित्वं रजतभेदव्याप्यमित्याकारकोद्बुद्धसंस्कारस्य शुक्तौ रजतमित्यादिज्ञाने प्रति बन्धकत्ववदद्वितीयाभावो ब्रह्मनिष्ठो ज्ञानाद्यभावो ब्रह्मनिष्ठ इत्याकारकोद्बुद्ध संस्कारस्यापि ब्रह्मरूपसदात्मकं द्वितीयं सदज्ञानमित्यादिधीप्रतिबन्धक त्वात्; नच सत्तादात्म्यमविषयीकुर्वति तादृशसमूहालम्बने उक्तसंस्कारस्या प्रतिबन्धकत्वेन तदुत्पत्तौ बाधकाभाव इति वाच्यम्, सदन्यविषयताया- स्सत्तादात्म्यविषयतानिरूपितत्वनियमस्यान्यत्र व्यवस्थापनात्; एवंच

ब्रह्मान्यविषयकज्ञानस्याहार्यत्वेनाबाधकत्वान्नाश्रयासिद्धि ;" इति; तन्न, भवन्मते तत्तदभावावगाहिज्ञानयोः प्रतिबध्यप्रतिबन्धकभावस्यैवानङ्गीकारात्। उक्तं हि गुरुभिः– " वस्तुतस्तु मन्मते प्रतिबन्धकत्वं न कस्यापि कुत्राप्युच्यते, अव्याप्यवृत्तिशक्तेर्मण्याद्यसमवहितवह्न्यादौ स्वीकारादि " त्यादिना । नच तज्ज्ञाने भ्रमत्वज्ञापकत्वमेव तत्प्रतिबन्धकत्वमित्युक्तसंस्कारस्य समूहालम्बनज्ञाने भ्रमत्वज्ञापकत्वेनोक्तसमूहालम्बनस्याप्रामाण्यज्ञानास्कन्दितत्वान्न प्रपञ्चनिवर्तकतासम्भव इति वाच्यम्, भवन्मतेऽप्रामाण्यस्य मिथ्याविषयकत्वरूपत्वेनोक्तसमूहालम्बनस्य घटाद्यंशे तदास्कन्दितत्वेपि ब्रह्मांशे तदनास्कन्दितत्वेन प्रपञ्चनिवर्तकताया दुर्वारत्वात् । नच तदुपादानाज्ञान निवर्तकत्वमेव संस्कारस्य तत्प्रतिबन्धकत्वमिति वाच्यम्, तथा सत्युक्त संस्कारेणैव प्रपञ्चभ्रमोपादानमूलाज्ञाननिवृत्तौ महावाक्यजन्याखण्डाकारवृत्ति वैयर्थ्यापत्तेः । वस्तुतस्तु ब्रह्मनिर्विकल्पकस्य प्रपञ्चधीविरोधित्वमयुक्त मेव, तदभावाद्यनवगाहित्वात् ।

यत्तु " गन्धाभावव्याप्यं तादात्म्येन जलमिति ज्ञानस्य जलं गन्धवदिति धीविरोधित्ववत् द्वैताभावव्याप्यं तादात्म्येन ब्रह्मेति ज्ञानस्य द्वैतधीविरोधित्वं नानुपपन्नम्, निर्विकल्पकस्य तदभाव व्याप्यत्वानवगाहित्वेपि व्याप्यत्वप्रकारकसंस्कारविशिष्टस्य निर्विकल्पकस्य द्वैतभ्रमविरोधित्वं युक्तम्।" इति; तन्न, तथाविधसंस्कारस्यैव प्रतिबन्धकताया युक्तत्वेपि तद्विशिष्टनिर्विकल्पकस्य तदयोगात् । अन्यथा शुक्तित्वं रजतभेदव्याप्यमिति संस्कारस्यापि शुक्तिः रजतमिति धीप्रतिबन्धकत्वानुपपत्तेः । किंच द्वैताभावव्याप्यत्वविशिष्टविषयकज्ञानस्यापि द्वैतधीविरोधितया "एकमेव" त्यादिश्रुतेरुक्तव्याप्यत्वविशिष्टे तात्पर्यवर्णनेनैवोपपत्त्या सर्वा सम्मते निर्विकल्पे श्रुतेस्तात्पर्यकल्पनमनुचितम् ।

एतेन घटे तादात्म्येन घटान्यभ्रमे घटत्वादिविषयकज्ञानस्य विरोधित्वमावश्यकम्, अन्यथा घटो घटान्यविशिष्ट इति भ्रमापत्तेः, तथाच घटत्वावच्छिन्नप्रतियोगिताकभेदनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन प्रत्यक्षं प्रति तदिच्छाविरहविशिष्टज्ञानत्वेन घटत्वनिष्ठेनानवच्छिन्नविषयतासम्बन्धेन प्रतिबन्धकत्ववत्पूर्णानन्दरूपतद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदविशिष्टनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकत्व-सम्बन्धेन प्रत्यक्षे तदिच्छाविरहविशिष्टज्ञानत्वेन पूर्णानन्दस्वरूप निष्ठेनानवच्छिन्नविषयतासम्बन्धेन विरोधित्वमपि सर्वसम्मतमेव, एवञ्च ब्रह्मणि तादात्म्येन दृश्यप्रकारकधीमात्रे जडत्वादिभाननियमाज्जडत्वादेश्च पूर्णानन्दस्वरूपभेदरूपत्वात्पूर्णानन्दस्वरूपज्ञाने द्वैतभानं न सम्भवतीति निरस्तम्; भवन्मतसिद्धतादात्म्यस्य समवायस्थानीयत्वेन घटस्समवायेन घटान्यवानिति ज्ञानस्येव ब्रह्म ब्रह्मान्यवानिति ज्ञानस्योत्पत्तौ विरोधाभावात् । प्रपञ्चभाने निरुक्तजडत्वभाननियमस्याऽप्रामाणिकत्वाच्च । 'तत्त्वमसि' 'घटो विनाशी' त्यादिवाक्याभ्यां जायमाने ब्रह्मनिर्विकल्पके जडत्वादिवाचकपदाभावेन तेन रूपेण घटादिभानकल्पनस्यानुचितत्वाच्च । एवं द्वितीयाभावो ब्रह्मनिष्ठ इत्याद्युद्बुद्धसंस्कारस्य द्वितीयत्वावच्छिन्ने सत्तादात्म्यावगाहिज्ञानप्रतिबन्धकतायाः प्रामाणिकत्वेपि घटत्वाद्यवच्छिन्ने सत्तादात्म्यावगाहिधीप्रतिबन्धकत्वासम्भवेन 'अहं ब्रह्म, घटो विनाशी'त्यादिज्ञानस्याहार्यत्वासम्भवात् । नच घटाभावो ब्रह्मनिष्ठ इत्याद्युद्बुद्धसंस्कारोपि पूर्वमस्तीति वाच्यम्, दृश्यत्वव्याप्या यावन्तो धर्मास्तत्तदवच्छिन्नाभावविशिष्टब्रह्मविषयकसंस्कारसत्त्वे प्रमाणाभावेन यद्धर्मावच्छिन्नाभावविषयकसंस्कारः पूर्वमसिद्धस्तद्धर्मावच्छिन्ने सत्तादात्म्यावगाहिनः 'अहं ब्रह्मास्मि, तद्धर्मावच्छिन्नस्स'न्नित्यादिसमूहालम्बनस्यानाहार्यस्य सम्भवात् । अत एव "एकमेवाद्वितीय" मिति श्रुत्यर्थविचारावसरे

इदम्पदस्य द्वैतत्वावच्छिन्नबोधकत्वे तदवच्छिन्नब्रह्मोद्देश्यकस्य द्वैतत्वावच्छिन्नप्रतियोगिताकाभावबोधस्योक्तश्रुतिवाक्यजन्यस्याहार्यत्वापत्तिरित्याशङ्क्य, इदम्पदस्य दृश्यत्वावच्छिन्नबोधकत्वेन दृश्यविशिष्टे ब्रह्मणि द्वैतत्वावच्छिन्नाभावबोधस्य तद्वाक्यादुत्पत्त्या नाहार्यत्वमिति भवतामेव समाधानं सङ्गच्छते । भिन्नरूपेण तत्तदभावावगाहिज्ञानयोरपि बाध्य बाधकभावस्वीकारे च उक्तश्रुतिजन्यबोधस्याहार्यत्वं दुष्परिहरम् । एवं मिथ्यात्वानुमितेस्तद्धर्मावच्छिन्नाधिकरणे तद्धर्मावच्छिन्नाभावविषयकत्वेनाहार्यत्वेपि यथा अज्ञानादिनिवर्त्तकत्वं तथोक्तसमूहालम्बनात्मकब्रह्मसाक्षात्कारस्याहार्यत्वेपि प्रपञ्चबाधकतासम्भवाच्च इत्युक्ताश्रयासिद्धिर्दुर्वारा ।

एतेन सप्रकारकज्ञानाबाध्यत्वमेवोक्तविशेषणार्थः, ब्रह्मण्यारोपित ध्वंसप्रतियोगित्वस्य ध्वंसप्रतियोगित्वाभावप्रकारकज्ञानबाध्यत्वाद्वारणमिति निरस्तम् ; इदन्त्वावच्छिन्ने तत्त्वावच्छिन्नप्रतियोगिताकभेदे नायं स इति भ्रमसिद्धेः सिद्धसाधनावारणात् । तस्य सोयमिति तत्तेदन्तोपलक्षित स्वरूपविषयकनिर्विकल्पकधीबाध्यत्वेन सप्रकारकज्ञानाबाध्यत्वानपायात् ; "अहं ब्रह्म, घटो विनाशी' ति घटांशे सप्रकारकं यज्ज्ञानं जगतस्तादृश ज्ञानबाध्यत्वेनाश्रयासिद्धेश्च । नचोक्तसमूहालम्बनस्यापि प्रपञ्चबाधकत्वे "'तमेव विदित्वातिमृत्युमेती" ति श्रुत्या आत्मान्याविषयकज्ञानस्याविद्या निवर्त्तकत्वोक्तिविरोध इति वाच्यम् , 'अन्नमेव भुक्त्वा तृप्तिविशेषमाप्नोती' त्यादावन्नेतरभोजनत्वानवच्छिन्नान्नभोजनत्वावच्छिन्नजनकताकतृप्तिमानित्याद्यर्थकत्ववत् 'तमेवे'त्यादेरात्मान्यविषयकत्वानवच्छिन्नात्मज्ञानत्वावच्छिन्नजनकताकमुक्तिमानित्यर्थकत्वेनाऽविरोधात् । उक्तश्रुतौ पूर्वकालीनत्वार्थकस्यापि ल्यपस्तात्पर्यवशाल्लक्षणया जनकत्वार्थकत्वात् । तत्रच आत्मानमिति द्वितीयान्तार्थात्मविषयकत्वान्वितविदिधात्वर्थस्याधेयतया तद्विशेषणतापन्नस्यात्मविषयकत्वविशिष्टवेदनत्वस्य चावच्छिन्नत्वसंसर्गेणान्वयादात्मविषयकत्वावच्छिन्नतादृशवेदननिष्ठजनकतालाभात् एवकारेण चान्ययोगव्यवच्छेदार्थकेनात्मान्य

विषयकत्वस्य अवच्छिन्नत्वसम्बन्धावच्छिन्नाभावस्य तादृशजनकत्वे बोधात् । नच सामान्यतोऽन्ययोगव्यवच्छेदस्याऽप्रसिद्धचा अन्य योगे व्यवच्छेदे च एवकारस्य खण्डशश्शक्तिः, प्रकृते चान्ययोगोऽन्य विषयकत्वमेव विवक्षितम्, पृथिव्यामेव गन्ध इत्यादावन्यसमवेतत्वादिकामिव; तद्घटकान्यत्वेचात्मपदार्थस्यात्मत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वयादात्मान्यविषयकत्वानवच्छिन्नत्वलाभ इति वक्तव्यम्; तच्च न सम्भवति; एकत्र विशेषणतयाऽन्वितस्याऽन्यत्र विशेषणतयाऽन्वयायोगेन आत्मानमिति द्वितीयार्थविशेषणस्यात्मन उक्तान्यत्वे विशेषणत्वासम्भवादिति वाच्यम्; पृथिव्यामेव गन्ध इत्यादौ सप्तम्यर्थविशेषणतापन्नस्य पृथिव्यादेरेवकारार्थे अन्वयवदेवकारस्थलनियन्त्रितव्युत्पत्तिवैचित्र्यादेव प्रकृतेपि तथान्वयसम्भवात् । नच पृथिव्यामेव गन्ध इत्यादौ पृथिव्यादेस्सप्तम्यर्थैवकारार्थयोर्युगपदेवान्वयान्नोक्तव्युत्पत्तिसंकोचावश्यकतेति वाच्यम्, सप्तम्यर्थे पृथिव्यादेरन्वयप्रयोजकसामग्र्याः प्राथमिकत्वेन प्रथमं तादृशबोधानुत्पादे बीजाभावात्, एवकारार्थाविषयकतद्बोधे तत्समभिव्याहृतैवकारधियो विरोधित्वे च गौरवात्, उक्तस्थल इव 'तमेवे'त्यादावपि युगपदन्वयाङ्गीकारसम्भवाच्च । वस्तुतस्तदादिन्यायेनैवकारस्य समभिव्याहृतपदार्थतावच्छेदकावच्छिन्नान्ययोगव्यवच्छेदे शक्तिस्वीकारान्न कोपि दोष इति बोध्यम् । सिद्धान्ते च "तमेवे" त्यादेः 'तं विदित्वैवे' ति योजनयोद्देश्यतावच्छेदकसमानाधिकरणात्यन्ताभावाप्रतियोगित्वरूपायोगव्यवच्छेदपरैवकारेण 'शंखः पाण्डर एवे' त्यादौ पाण्डरत्वे शंखत्वव्यापकत्व बोधवत्तद्विषयकज्ञानहेतुकत्वे मुक्तित्वव्यापकत्वबोधेन सगुणध्यानस्य मुक्ति हेतुत्वेपि विरोधाभावात् । नच "तमेवं विद्वानमृत इह भवति, नान्यः पन्था अयनाय विद्यत" इति श्रुत्या ब्रह्मज्ञानाघटितसामग्र्या मोक्षप्रयोजकत्वाभावप्रतिपादनात्तज्ज्ञानहेतुकत्वे मुक्तित्वव्यापकत्वं प्राप्तमेव, "नान्यः पन्था" इत्यादेर्ब्रह्मज्ञानान्यस्य हेतुत्वाभावपरत्वं तु न

सम्भवति, ब्रह्मज्ञानान्यस्य जीवभगवत्प्रसादादेर्मोक्षहेतुतायास्सिद्धान्तसिद्ध त्वात् ; तथाच 'तमेवे' त्यादेरुक्तार्थकत्वे स्वानुपजीविमानान्तराग्राह्या-र्थकत्वरूपापूर्वता न सम्भवतीति वाच्यम् ; उक्तश्रुतेर्भवन्मतेप्यपूर्वत्वा सम्भवस्य तुल्यत्वात् , "तमेवैकं जानथात्मान" मित्यनेन प्राप्तार्थ-त्वात ; यदि च "भेदान्नेतिचेदेकस्यामपी" ति सूत्रोक्तन्यायेन प्रति पत्तृभेदादपूर्वत्वोपपत्तिः, तत्तच्छाखाध्यायिनं प्रति तस्य तस्य वाक्यस्या पूर्वत्वात् स्वबोधनीयपुरुषगताज्ञानादिविरोधिना स्वानुपजीविना माना न्तरेणाग्राह्यार्थत्वस्यैवापूर्वतारूपत्वात् "तमेव विदित्वे" ति वाक्यमेव येन प्रथमं श्रुतं तं प्रति तस्यापूर्वतानिर्वाहात् , "तमेवैकं जानथे" त्यादेस्स्वानुपजीविमानान्तरत्वेपि स्वबोधनीयपुरुषगताज्ञानादिविरोधित्वाभा नादित्युच्यते ?, तदा ऽस्माकमप्युक्तरीत्यैवापूर्वत्वोपपत्तिरिति तुल्यम् ; तथाच पूर्वोक्तब्रह्मसाक्षात्कारस्य समूहालम्बनात्मकस्य प्रपञ्चबाधकत्वे प्युक्तश्रुतिविरोधाभावादाश्रयासिद्धिर्दुर्वारा ।

(यत्तु – ज्ञानस्य स्वसमानविषयकाज्ञानतज्जन्यभ्रमविषयाविषयकत्व नियमात् "अहं ब्रह्म, घटो विनाशी" ति समूहालम्बनं न सम्भ-वति, अन्यथा 'शुक्तिरियम् , रजतमिद' मित्यादिसमूहालम्बनस्यापि सम्भवात ; 'इयं शुक्तिस्तद्रूप्यं ज्ञेय' मिति ज्ञानस्य तु नासम्भवः, स्वसमानकालीनत्वेनापि विषयस्य विशेषणीयत्वात् , उक्तज्ञानस्य 'तद्रूप्य' मित्यंशे स्मृतिरूपत्वेनातीतरूप्यादिविषयकत्वेन स्वसमानकालीन रूप्याद्यविषयकत्वात् ; नच ज्ञानं स्वसमानविषयकाज्ञानतज्जन्यभ्रमत-द्विषयनाश इति पक्षे उक्तनियमस्य युक्तत्वेपि ज्ञानान्योक्तनाशहेतुता पक्षे नोक्तनियम इति वाच्यम् ; ज्ञानस्य नाशत्वपक्षसाम्यानुरोधेन नाशकत्वपक्षेप्यसमूहालम्बनस्यैव तथात्वादिति; तन्न;- जीवन्मुक्तिकाले भुज्य मानादृष्टदेहादिसत्त्वेन तद्विषयकब्रह्मज्ञानोत्पत्तौ बाधकाभावेनोक्तनियमस्या ऽयुक्तत्वात ।)

नच ब्रह्मान्यविषयकत्वावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतावत्स्व-स्वोपादानान्यतरत्वावच्छिन्नाभावकान्यत्वमेवोक्ताबाध्यत्वांतार्थः; शुक्तिरूप्य तदुपादानान्यतरत्वावच्छिन्नाभावस्य शुक्तिविषयकत्वावच्छिन्नप्रयोजकता-कत्वादुक्तध्वंसप्रतियोगित्वस्येदंत्वावच्छिन्नानुयोगिकतत्त्वावच्छिन्नप्रतियोगि-कभेदस्यापि तादृशत्वाद्व्याप्तिः; यद्वा ब्रह्मान्यविशिष्टान्यत्वमेव तदर्थः, वैशिष्ट्यं च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्न स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन; स्वाधिकरणता- स्ववि-षयकाप्रामाण्यज्ञानाऽनास्कन्दितनिश्चयत्वसम्बन्धेन; भेदप्रतियोगितावच्छेद कता - स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन; स्वनिष्ठावच्छेद कता – स्वपूर्वत्व, स्वप्रयोजकाज्ञानसमानकालीनत्वान्यतरसम्बन्धावच्छिन्ना; तथाच शुक्तिरूप्यादेरुक्तसम्बन्धेन शुक्त्यादिविशिष्टत्वादुक्तध्वंसप्रति-योगित्वादेश्च ध्वंसप्रतियोगित्वाभावविशिष्टब्रह्मविशिष्टत्वाद्विशिष्टब्रह्मणश्च शुद्धब्रह्मभिन्नत्वादुक्तभेदस्य च तत्तेदन्तोपलक्षितस्वरूपविशिष्टत्वान्नोक्तसिद्ध-साधनावकाशः, न वा आश्रयासिद्धिश्चेति वाच्यम्;— नानाज्ञानपक्षे उक्त विशेषणेन शुक्तिरूप्यादिवारणेप्येकाज्ञानपक्षे तदवारणात्, तत्पक्षे शुक्तिज्ञानकालेपि शुक्तिरूप्योपादानाज्ञानसत्त्वात्, नानाज्ञानपक्षेपि ब्रह्मत्वोपलक्षितानुयोगिके ज्ञानत्वोपलक्षितप्रतियोगिकभेदे 'ब्रह्म न ज्ञान' मिति भ्रमसिद्धे "सत्यं ज्ञान" मित्यादिशोधकवाक्यजन्यधीबाध्ये सिद्धसाधनस्य दुर्वारत्वाच्च । एतेन ब्रह्मनिष्ठनिरवच्छिन्नविषयताशून्य ज्ञानाबाध्यत्वमेवोक्तविशेषणार्थः, निरवच्छिन्नविषयता च प्रकारताभिन्ना ग्राह्या; तेन 'इयं शुक्ति' रित्यादिज्ञानस्य सन्निष्ठनिरवच्छिन्नप्रकारताकत्वेपि शुक्तिरूप्यादौ न सिद्धसाधनम्, न वा आश्रयासिद्धिश्चेति निरस्तम् ।

यदपि जीवत्वब्रह्मत्वाद्युपलक्षितब्रह्मनिरूपितविषयताकान्यज्ञानाबा-ध्यत्वमेवोक्तविशेषणार्थः, 'सत्य' मित्यादिवाक्यजन्यज्ञानविषयत्वस्य सत्य-

त्वाद्युपलक्षितब्रह्मनिरूपितत्वेपि जीवत्वाद्युपलक्षितानिरूपितत्वेन नोक्तभेदे सिद्धसाधनमिति ; तन्न ; द्वैतवादिमते जीवत्वब्रह्मत्वाद्युपलक्षितब्रह्मनिरूपितविषयिताया अप्रसिद्धेः, समानाकारज्ञानेषु विषयिताभेदस्याऽप्रामाणिकत्वेन 'सत्यं ज्ञान' मित्यादिवाक्यजन्यबोधस्य "तत्त्वमसी" त्यादिवाक्य जन्यबोधादविलक्षणाकारतया तादृशबोधस्य जीवत्वाद्युपलक्षितब्रह्मनिरूपित विषयिताकत्वानपायादुक्तसिद्धसाधनस्य दुर्वारत्वात् । एतेन महावाक्य जन्यतानवच्छेदकीभूतविषयताविशिष्टान्यत्वमेवार्थः, वैशिष्ट्यञ्च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताक-प्रतियोगिताकभेदवत्त्वसम्बन्धेन, स्वाधिकरणता – स्वनिरूपकाप्रामाण्य ज्ञानानास्कन्दितनिश्चयत्वसम्बन्धावच्छिन्ना, भेदप्रतियोगितावच्छेदकता – स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन, स्वनिष्ठावच्छेदकता चोक्तान्यतरसम्बन्धावच्छिन्ना; तथाच तादृशभेदस्योक्तसम्बन्धेन महा वाक्यजन्यतानवच्छेदकीभूत 'सत्य' मित्यादिबोधीयविषयताविशिष्टत्वा द्वारणमिति निरस्तम् ;— महावाक्यानां परस्परजन्यबोधे व्यभिचारवारणायाऽव्यवहितोत्तरत्वस्य जन्यतावच्छेदकत्वे विषयितानिवेशे प्रयोजन विरहेण महावाक्यजन्यबोधीयविषयताया अपि तादृशवाक्यजन्यतानवच्छेद कत्वेनाश्रयासिद्धेश्च ।

नच महावाक्याजन्यज्ञानविशिष्टान्यत्वमेवोक्तविशेषणार्थः, ज्ञानवैशिष्ट्यंचाधेयतासम्बन्धेन, आधेयता च – स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन; स्वनिष्ठावच्छेदकता – स्वपूर्वत्व, स्वप्रयोजकाज्ञानसमानकालीनत्वान्यतरसम्बन्धावच्छिन्ना; महावाक्यत्वं च जीवब्रह्माभेदतात्पर्यकत्वेनाद्वैत्याभिमतत्वम् ; तथाच ब्रह्मत्वोपलक्षिते ज्ञान त्वाद्युपलक्षितभेदस्य महावाक्याजन्यं यच्छोधकवाक्यजन्यज्ञानमुक्ताधेयता सम्बन्धेन तद्विशिष्टत्वान्न सिद्धसाधनमिति वाच्यम् ; तथा सति 'तत्त्व

मसी' त्यादिवाक्यजन्यनिर्विकल्पकधीकाले विद्यमानं यद् घटादिज्ञानम्, उक्ताधेयतासम्बन्धेन प्रपञ्चस्य तद्विशिष्टत्वेनाश्रयासिद्धेः । नच "कदाचिदद्वैतदर्शनम्, कदाचित् द्वैतदर्शनम, न पुनर्युगपदेवोभयम्, संतमसबहुळालोकयोरिव विरोधा" दिति विवरणोक्तेस्तत्काले घटादिज्ञानं न सम्भवतीति वाच्यम्; तथापि तत्काले सत्यादिशोधकवाक्यजन्यधीसम्भवेन तादृशधियमादायाश्रयासिद्धेः । नचाव्यवहितोत्तरत्वसम्बन्धेन महावाक्यविशिष्टान्यत् यज्ज्ञानम्, उक्ताधेयतासम्बन्धेन तद्विशिष्टान्यत्वमेवार्थः; तथाच महावाक्यजन्यधीकालीनस्य शोधकवाक्यजन्यज्ञानस्याव्यवहितोत्तरत्वसम्बन्धेन महावाक्यविशिष्टत्वेन तदन्यत्वाभावाद्व्यावृत्तिरिति वाच्यम्; एवमप्यखण्डाकारब्रह्मज्ञानबाध्ये तदव्यवहितपूर्ववृत्तिप्रातिभासिके सिद्धसाधनात्; तस्योक्तधेयतासम्बन्धेन महावाक्याव्यवहितोत्तरवृत्तिभिन्नज्ञानविशिष्टान्यत्वात् ।

यत्तु – स्वजन्यध्वंसप्रतियोग्यज्ञानप्रयुक्तत्वसम्बन्धेन ध्वंसविशिष्टान्यत्वस्यापि पक्षविशेषणत्वात्तादृशप्रातिभासिकस्य व्यावृत्तिः, तादृशप्रातिभासिकस्य मूलाज्ञानध्वंसजन्यध्वंसप्रतियोग्यज्ञानप्रयुक्तत्वात्तादृशप्रातिभासिकोपादानाज्ञानस्याखण्डाकारवृत्त्यसमानविषयकत्वेन तन्नाश्यत्वायोगाज्जीवेशभेदादिरूपानाद्यन्तराणामिव मूलाज्ञाननाशनाश्यताया एव युक्तत्वादिति; – तन्न, एवमपि तादृशप्रातिभासिकोपादानाज्ञाने सिद्धसाधनावारणात् । नच तादृशाज्ञानस्य मिथ्यात्वेन द्वैतमतसिद्धत्वाभावान्न तत्र सिद्धसाधनसम्भवः, यद्वा स्वजन्यध्वंसप्रतियोगित्व, स्वजन्यध्वंसप्रतियोग्यज्ञानप्रयुक्तत्वान्यतरसम्बन्धेन ध्वंसविशिष्टान्यत्वस्य विवक्षयोक्तदोषवारणमिति वाच्यम्; जीवेशभेदादिरूपानादिपदार्थानां पक्षबहिर्भावापत्तेः, स्वजन्यध्वंसप्रतियोग्यज्ञानत्वस्यान्यतरसम्बन्धघटकत्वेऽप्यज्ञानस्य पक्षबहिर्भावापत्तेः;

ज्ञानस्यापि स्वप्रागभावध्वंसरूपत्वेनाज्ञानस्योक्तसम्बन्धेन ज्ञानात्मकध्वंस विशिष्टत्वेन तदन्यत्वाभावात् । नच स्वावच्छिन्नजनकतानिरूपित जन्यतावन्नाशप्रतियोगितावेशिष्टत्वसम्बन्धेन ध्वंसत्वविशिष्टान्यत्वमेव निवेश्यमिति न दोषः, ज्ञानस्य ध्वंसत्वेन दृश्यध्वंसहेतुत्वाभावात् ; प्रति योगितावैशिष्ट्यं च - स्वाश्रयत्व स्वाश्रयाज्ञानप्रयुक्तत्वान्यतरसम्बन्धेनेति वाच्यम् ;- एवमप्युक्तप्रातिभासिके सिद्धसाधनस्य दुर्वारत्वात् , ज्ञानेनाऽज्ञानध्वंसस्य तादृशाज्ञानध्वंसेन दृश्यान्तरध्वंसस्य च भवतां मतेऽनङ्गीकारात् ; तथा सति तत्त्वज्ञानजन्यस्याऽविद्याध्वंसस्य तादृशध्वंसजन्यस्य दृश्यान्तरध्वंसस्य च नाशकाभावेन मुक्तौ तयोः परिशेषापत्त्या "विद्वान्नामरूपाद्विमुक्त" इति श्रुतिबाधापत्तेः, ध्वंससामान्यस्यैवानङ्गीकारे चाश्रयासिद्धेः । स्पष्टंचेदमद्वैतसिद्धिटीकायां बिन्दुटीकायां च ।

एवमसति बाधवारणाय सत्तादात्म्यवत्त्वनिवेशनमित्यप्ययुक्तम् ; असत्ख्यात्यनङ्गीकर्तृमते असति बाधायोगात् ; तदङ्गीकारपक्षेपि साध्याभाववदसतो बाधत्वासम्भवात् , पक्षविशेष्यकसाध्यप्रकारकप्रतीति जनकाज्ञाननाशकता यद्रूपावच्छिन्नविषयकत्वावच्छिन्ना तद्रूपावच्छिन्नत्वस्यैव बाधलक्षणत्वात् ; असद्विषयकाज्ञानस्य भवन्मते अनङ्गीकारेण तद्विषयकज्ञानस्याज्ञाननिवर्तकत्वाभावात् । नच यद्रूपावच्छिन्नविषयिता व्यापिका पक्षविशेष्यकसाध्यप्रकारकानुमितिप्रतिबन्धकता तद्रूपावच्छिन्नत्वमेव बाधत्वमिति साध्याभाववदसतोप्युक्तबाधत्वं सम्भवतीति वाच्यम् , भवन्मते अभावमात्रस्य केवलान्वयितया ऽतिप्रसङ्गेन तस्य कार्यजनकत्वासम्भवेन प्रतिबन्धकतायाः कारणीभूताभावप्रतियोगितारूपत्वासम्भवात

तज्जनकाज्ञाननाशकतारूपत्वस्यावश्यकत्वात् । नच मिथ्यात्वघटकाभावस्य पारमार्थिकत्वपक्षे तादृशाभावस्य केवलान्वयित्वेपि व्यावहारिकाभावस्या तथात्वेनानतिप्रसङ्गात् कार्यजनकत्वं सम्भवति, व्यावहारिकाभावस्य मिथ्यात्वघटकत्वेपि लोकसिद्धविशेषणतानागन्यतमत्वेन कारणतावच्छेदक सम्बन्धत्वाङ्गीकारान्नातिप्रसङ्ग इति कारणीभूताभावप्रतियोगितारूपमेव प्रति बन्धकत्वं बाधशरीरे निवेशयितुं शक्यत इति वाच्यम्; – तथासति पर्वतो वह्निमान् धूमादित्यादौ प्रातिभासिकवह्न्यभाववत्पर्वतस्यापि बाध-त्वापत्तेः, तज्ज्ञानस्यापि निरुक्तप्रतिबन्धकत्वाक्रान्तत्वात् । तज्जनकाज्ञान नाशकत्वनिवेशे तु नातिप्रसङ्गः, प्रातिभासिकस्याज्ञानाविषयत्वात् । यद्रूपावच्छिन्नविषयिता अनुमितिप्रतिबन्धकतावच्छेदिका स्वसमानसत्ताक तद्रूपवत्त्वस्य विवक्षणेन प्रातिभासिकवह्न्यभाववत्पर्वतस्य वारणे तु साध्या-भाववदसतो बाधत्वकथनमयुक्तमेव; असति कस्या अपि सत्ताया अभावात्। एतेन चिद्भिन्नत्वानुपादाने ब्रह्मणि बाधोपि निरस्तः, मिथ्यात्वाभावस्य व्याव हारिकत्वं तस्य ब्रह्मसमसत्ताकत्वाभावात्, शुद्धस्य ज्ञानाविषयत्वपक्षे बाधलक्षणस्यैवासम्भवाच्च । शुद्धस्य निर्विकल्पकधीविषयतापक्षेपि साध्या भावप्रकारकज्ञानाविषयत्वेन बाधलक्षणासम्भवस्तदवस्थः । अस्तु वा यथा कथञ्चिद्बाधः, तथापि सत्तादात्म्यवत्त्वं व्यर्थमेव, स्वसमानसत्ताकचिद्भेद वत्त्वरूपचिद्भिन्नत्वाभावादेव तद्वारणात; असतादात्म्यरूपस्य भवदभिमत सत्तादात्म्यस्य सत्यत्ववादिमते प्रपञ्चे अस्वीकारेण तादृशविशेषणोपा-दानस्य सन्दिग्धासिद्धिसम्पादकत्वाच्च । किञ्च प्रातीतिकव्यावृत्तरूपेण पक्षतावच्छेदककोटौ सत्तादात्म्यप्रवेशेनैव प्रातीतिकसत्तादात्म्यवतः प्राति भासिकस्य व्यावर्तनाद्ब्रह्मप्रमेत्यादिविशेषणवैयर्थ्यम्, भवन्मते सत्ता दात्म्यत्वरजतत्वघटत्वपटत्वादिकं हि त्रिविधम्– प्रातिभासिकमात्रवृत्ति व्याव हारिकमात्रवृत्ति तदुभयसाधारणञ्चेति, एवञ्चोभयसाधारणसत्तादात्म्यत्वेन

सत्तादात्म्यं निवेश्य प्रातिभासिके सिद्धसाधनसम्पादनस्य तद्वारकविशेष णान्तरोपादानस्य च " प्रक्षाळनाद्धी " ति न्यायग्रस्तत्वात् । किञ्चोभय साधारणसत्तादात्म्यत्वेन सत्तादात्म्यस्य पक्षतावच्छेदकघटकत्वे न तुच्छ व्यावृत्तिः, शशविषाणं सदिति भ्रमसम्भवेन शशविषाणादावपि प्रातीति कस्य सत्तादात्म्यस्य सम्भवात् । नच शशविषाणादौ न प्रातीतिक सत्तादात्म्यसम्भवः, अनुयोगिरूपेण परिणममानाविद्याया एव तन्निष्ठ सत्तादात्म्यरूपेण परिणममानत्वनियमेनाळीकरूपेणाविद्याया अपरिणम मानत्वादळीकनिष्ठतादात्म्यरूपेणाविद्यायाः परिणामाऽसम्भवात् ; शुक्ति रूप्यादिरूपेण परिणममानाविद्याया एव तन्निष्ठसत्तादात्म्यरूपेण परि णममानत्वादुक्तनियमस्यानपवादत्वादिति वाच्यम् ;—रजतं सदित्यादौ व्यावहारिकस्य शुक्त्यादिनिष्ठसत्तादात्म्यस्यैव रजतसंसर्गत्वोपपत्तौ तत्र सत्ता-दात्म्यपरिणामे मानाभावात । नच तस्य रजतानुयोगिकत्वाभावान्न रजतसंसर्गत्वसम्भव इति रजतानुयोगिकतादात्म्यपरिणामस्यावश्यकतेति वाच्यम् ; तादात्म्यानुयोगित्वयोर्विश्रृङ्खलयोः परिणामेपि रजतानुयोगिक तादात्म्यनिर्वाहात् ; अनुयोगित्वस्य, रजतसत्तादात्म्याभ्यां तत्सम्बन्धयोः तयोरपि विश्रृङ्खलयोर्वैशिष्टभाननिर्वाहकत्वेन तत्सम्बन्धानामपीत्येवमनव-स्थितानन्तपरिणामकल्पनापत्तेः; तावत्सम्बन्धानाञ्च रजतं सदित्यादिज्ञाने भानस्यानुभवविरुद्धत्वात् ; तदपेक्षयाऽनुयोगित्वमात्रस्य परिणामौचित्यात्; सम्बन्धसम्बन्धस्याऽभाने तत्परिणामस्याप्यनावश्यकत्वात् । एवं सत्प्रति-योगिकतादात्म्यस्योक्तनियमस्वीकारेणाळीकावृत्तित्वेपि सदनुयोगिकाळीकप्रति योगिकतादात्म्यस्याळीकसाधारण्ये क्षतिविरहात् ; सद्रूपेण परिणममाना ऽविद्याविरहेण तादृशतादात्म्यस्यानुयोगिपरिणाम्यविद्याकार्यत्वाभावात् ।

यदपि सदनुयोगिकतादात्म्यस्योक्तरीत्या असत्साधारण्येपि न क्षतिः, सत्प्रतियोगिकतादात्म्यस्यैव पक्षतावच्छेदकघटकत्वादिति; तदपि न,

तथासति अनुयोगितासम्बन्धेन सत्प्रतियोगिकतादात्म्यस्य पक्षतावच्छेदक-घटकत्वेनैव ब्रह्मणि बाधवारणे चिद्भिन्नत्वविशेषणवैयर्थ्यात्, स्वस्मिन् स्व-प्रतियोगिकतादात्म्यानुयोगित्वाभावात् ; - प्रतियोगितानुयोगितान्यतरसम्बन्धेन तादृशतादात्म्यस्य घटकतां स्वीकृत्य ब्रह्मणि बाधसम्पादनस्य "प्रक्षाळनाद्धी" ति न्यायग्रस्तत्वात् । सत्प्रतियोगिकतादात्म्यनिवेशे आश्रयासिद्धिश्च, इदम्पदार्थे रजतस्येव ब्रह्मणि दृश्यमात्रस्य तादात्म्येनाऽध्यस्ततया इदम्पदार्थे रजतप्रतियोगिकतादात्म्यस्येव ब्रह्मणि दृश्यप्रतियोगिकतादात्म्यस्योत्पत्तिसम्भवेपि घटादिदृश्ये सद्रूपब्रह्मणोऽनध्यासात्तत्र सत्प्रतियोगिकतादात्म्यस्वीकारे प्रमाणाभावात् ।

यत्तु— इदं रजतं रजतमिदमिति ज्ञानद्वयस्य परस्परवैलक्षण्यनिर्वाहाय प्रथमप्रतीतेरिदम्पदार्थे रजततादात्म्यावगाहित्वं द्वितीयप्रतीतेः रजते इदन्तादात्म्यावगाहित्वं स्वीकर्तव्यम्, तथा घटस्सन्, सन् घट इति प्रतीतिद्वयानुरोधेन सति घटादितादात्म्यमिव घटादौ सत्तादात्म्यमपि सिद्ध्यतीति; - तन्न; - उपनीतं विशेषणतयैव भासत इति वदद्भिर्नैयायिकादिभिः प्रथमप्रतीतेः स्वीकारेपि द्वितीयप्रतीतेरनङ्गीकारेण तादृशप्रतीतेरप्रामाणिकत्वात्; प्रामाणिकत्वेपि विषयितावैलक्षण्येनैव ज्ञानवैलक्षण्यनिर्वाहेण तदर्थं विलक्षणविषयकल्पनस्यायुक्तत्वात्; अन्यथा घटवद्भूतलम् घटभूतलसंयोगा इति ज्ञानयोर्वैलक्षण्यनिर्वाहाय तत्रापि विलक्षणविषयकल्पनापत्तेः । नच प्रथमज्ञाने सम्बन्धविधया भासमानस्य संयोगस्य सम्बन्धोऽप्यधिको भासते, नतु समूहालम्बनरूपचरमज्ञान इति विषयवैलक्षण्यादेवोभयोर्वैलक्षण्यमिति वाच्यम् ;— संयोगादिप्रतियोगिकसम्बन्धमादायापि समूहालम्बनसम्भवात् । नच संयोगसंसर्गकविशिष्टबुद्धौ संयोगः स्वरूपत एव भासते, नतु संयोगत्वेन ; सखण्डपदार्थस्यापि सम्बन्धविधया स्वरूपतो भानोपगमात् ;

उक्तसमूहालम्बने च संयोगत्वेन संयोगो भासत इति संयोगत्व रूपाधिकपदार्थभानाऽभानाभ्यामेव तयोर्विशेष इति वाच्यम् ; एवमपि घटवद्भूतलं संयोगश्च, घटभूतलसंयोगा इति ज्ञानयोर्विशेषानिर्वाहात् । (नच घटवद्भूतलमिति ज्ञाने घटविशिष्टभूतलस्य विषयत्वं समूहालम्बने च शुद्धभूतलस्येति विशेषः, विशिष्टस्यातिरिक्तत्वादिति वाच्यम् ; विशिष्टस्यातिरिक्तताया अनुपदमेव निराकरिष्यमाणत्वात् )

यत्तु — विषयतावैलक्षण्याज्ज्ञानवैलक्षण्योपपादने बहिर्विषयमात्र विलोपापत्त्या साकारवादापत्तिः, अयं घटः अयं पट इति ज्ञानानां मिथो वैलक्षण्याय हि तेषां विषयाः परस्परं भिन्ना घटपटादिरूपा उप गम्यन्ते, तदुक्तमुदयनाचार्यैः - "अर्थेनैव विशेषो हि निराकारतया धिया" मिति ; अर्थेन- ज्ञानादत्यन्तभिन्नेन घटादिरूपेण, अभिन्नो धियां विशेषः, निराकारतया— ज्ञानधर्मरूपाकारेण घटादिना विषयितास्थानी येन हीनतया ; तथाच घटादिकं विषयितास्थानीयं ज्ञानधर्मो ज्ञानाद्भिन्नाभिन्नतया बौद्धैर्यदुच्यते, न तत्तथा, किन्तु ज्ञानादत्यन्त भिन्न एव विषयो ज्ञानवैलक्षण्यसम्पादक इति स्वीकार्यम् ; तथाच इदं रजतम् रजतमिदमिति प्रतीत्योर्वैलक्षण्यनिर्वाहाय रजतप्रतियोगिकेद- म्प्रतियोगिकतादात्म्यद्वयमिव प्रकृतेपि घटस्सन् सन् घट इति प्रतीति द्वयवैलक्षण्याय तादात्म्यद्वयमावश्यकमिति । तन्न; विषयितावैलक्षण्यात् ज्ञानवैलक्षण्येपि विषयितावैलक्षण्यस्य विषयवैलक्षण्याधीनतया बहिर्विषय विलोपापत्त्यनवकाशात् ; स्वतोव्यावृत्तविषयिताकल्पनस्यैव बौद्धमतप्रवेशा पादकत्वात् , विषयव्यावृत्तविषयिताकल्पनस्याऽतथात्वात् ; अन्यथा भवतामपि बौद्धमतप्रवेशापत्तेर्दुर्वारत्वात् ; भवद्भिरपि ज्ञानविषययोस्सम्बन्ध भूतस्य विषयित्वस्य स्वीकारात् ; तच्च चित्तादात्म्यरूपं ज्ञाना द्भिन्नाभिन्नमिति भवत्सिद्धान्तात् ; ज्ञानवैलक्षण्यस्य साक्षाद्विषयवैलक्षण्या

धीनत्वाभावेपि परम्परया तदधीनत्वादेव 'अर्थनैवे' त्यस्योपपत्तेः ; 'निराकारतये' त्यस्यापि स्वतो व्यावृत्तविषयिताशून्यतयेत्यर्थात् । नच विषयवैलक्षण्याद्विषयितावैलक्षण्यम्, तद्वैलक्षण्याच्च ज्ञानवैलक्षण्यमिति प्रणालीकल्पनापेक्षया साक्षाद्विषयवैलक्षण्यादेव ज्ञानवैलक्षण्यमिति कल्पन मुचितमिति वाच्यम् ;- यत्र विषयवैलक्षण्याज्ज्ञानवैलक्षण्यं न सम्भवति- यथा पूर्वोक्तयोर्घटवद्भूतलं घटभूतलसंयोगा इति समूहालम्बनविशिष्ट बुद्ध्योः, तत्र विषयितासु विशेष्यितात्वादिकमखण्डं कल्पयित्वा तादृश विषयितावैलक्षण्यादेव ज्ञानवैलक्षण्योपपादनात् ; तत्रापि विलक्षणविषय कल्पने घटपटादिरूपनानापदार्थविषयकसमूहालम्बनविशिष्टबुद्धिभेदेनानन्त- विषयकल्पनापत्तेः; तदपेक्षया विशेष्यितात्वादेरखण्डस्य कल्पने लाघवात् ; अत एव विशेष्ये विशेषणमिति रीत्या जायमानात्तत्क्षणविशिष्टघटवानिति ज्ञानाद्विशिष्टवैशिष्ट्यावगाहिनस्तत्क्षणविशिष्टघटवानितिज्ञानस्य वैलक्षण्यो पपत्तिः, विशिष्टवैशिष्ट्यावगाहिज्ञानीयतत्क्षणनिष्ठविषयतायामवच्छेदकता- त्वरूपाखण्डधर्मस्य कल्पनात्, विशेष्ये विशेषणमितिज्ञानीयतत्क्षणनिष्ठ विषयतायां च तदकल्पनात् । एवमेव एकत्र द्वयमिति रीत्या तत्क्षण घटत्वोभयविशिष्टवैशिष्ट्यावगाहिज्ञानात् घटत्वविशिष्टे तत्क्षणप्रकारकस्य विशिष्टवैशिष्ट्यावगाहिज्ञानस्य वैलक्षण्यनिर्वाहः, तत्र प्रथमज्ञाने उभय निष्ठप्रकारतानिरूपितविशेष्यताया निरवच्छिन्नत्वात्, द्वितीयज्ञाने च क्षण- निष्ठप्रकारतानिरूपितविशेष्यताया घटत्वावच्छिन्नत्वात् ।

यत्तु- विशिष्टवैशिष्ट्यावगाहिज्ञाने विशिष्टस्य विषयत्वात् विशेष्ये विशेषणमिति रीत्या ज्ञाने केवलस्य विषयत्वात् विषयवैलक्षण्यादेव तयो र्विशेषः, विशिष्टकेवलयोर्भेदादिति; तन्न, विशिष्टस्यातिरिक्तत्वे क्षणि- कत्वापत्त्या बौद्धमतप्रवेशापत्तेः, तत्तत्क्षणविशिष्टस्य भिन्नत्वात् । नच केवलस्य स्थिरत्वान्न दोष इति वाच्यम् ; – केवलरूपस्य तत्तत्क्षण

सम्बन्धित्वे भेदापत्तेः, क्षणासम्बन्धित्वे कालसम्बन्धित्वाभावेन तुच्छत्वा पत्तेः । एवं विशिष्टकेवलयोर्भेदे विशिष्टसत्ता न सत्तेति प्रत्ययापत्तिश्च ।

यत्तु – समानविभक्तिकप्रतियोग्यनुयोगिवाचकपदसमभिव्याहृतनञो ऽभेदविरोधित्वविशिष्टस्वरूपसंसर्गकभेदप्रकारकशाब्दबोधजनकत्वादसमान - विभक्तिकप्रतियोग्यनुयोगिवाचकपदसमभिव्याहृतनञश्च प्रतियोगिविरोधित्व विशिष्टस्वरूपसंसर्गकाभावबोधजनकत्वाद्विशिष्टसत्ता न सत्तेति न प्रत्ययः, विशिष्टशुद्धयोर्भेदाभेदाङ्गीकारेणाऽभेदविरोधित्वविशिष्टस्वरूपसम्बन्धेन भेद विरहात्; विशिष्टसत्ता न सत्तेति प्रात्याक्षिकप्रत्ययस्यापि नापत्तिः, तादृशप्रत्ययेप्युक्तस्वरूपस्यैव संसर्गत्वात्; अभिलप्यमानप्रतीतेरभिलाप जन्यबोधसमानाकारत्वादिति । तन्न, वृक्षे न कपिसंयोग इति प्रत्ययस्य भ्रमत्वापत्तेः, तत्र स्वरूपसम्बन्धे प्रतियोगिविरोधित्वविरहात् । नच तत्राप्येकावच्छेदेनैकाधिकरणावृत्तित्वरूपविरोधोऽस्तीति वाच्यम्;– तथापि 'नेह नानास्ती' ति श्रुतिजन्यबोधस्य भ्रमत्वापत्तेः; भेदाभेदयोः परस्परं विरुद्धत्वेन विशिष्टकेवलयोर्भेदाभेदाङ्गीकारस्यायुक्तत्वाच्च ।

यदपि तद्घटे तद्घटसंयोगादिसत्त्वेपि तद्घटस्तद्घटवानिति धीः न प्रमा, किन्तु भूतलादौ तद्घटादिप्रकारकधीः प्रमेति व्यवस्था सिद्धये विशिष्टधीमात्रे विशेष्ये विशेषणस्य भेदसमानाधिकरणस्सम्बन्धो विषय इति कल्प्यते, तथाच सति हि तद्घटे तस्य संयोगादिसत्त्वेपि तद्भेदसमानाधिकरणसंयोगादिसम्बन्धस्यासत्त्वान्नोक्तधीः प्रमा, तथाच सत्ता विशिष्टसत्तयोरभेदसंसर्गकप्रत्ययेपि विशेषणभेदसमानाधिकरणाभेदस्यैव सं-सर्गत्वावश्यकत्वाद्विशिष्टकेवलयोर्भेदाभेदसिद्धिरिति । तन्न; तद्घटभेद वद्वृत्तित्वविशिष्टस्यापि संयोगस्य प्रतियोगितया तद्घटे सत्त्वेन तद्घटस्तद्घटवानिति प्रमापत्तेर्दुर्वारत्वात् । यदिच तादृशसंयोगस्स्वानु योगिन्येव स्वप्रतियोगिनस्सम्बन्धो नतु स्वप्रतियोगिनीति नियमान्नोक्ता

पत्तिरित्युच्यते तदा भेदस्य संसर्गघटकत्वं व्यर्थम्; तद्घटसंयोगानुयोगित्वस्य तद्घटे ऽभावादेव तस्य सम्बन्धत्वानुपपत्तेः । एवं विशिष्टकेवलयोर्भेदे केवलघटे तद्व्यक्तित्वविशिष्टघटभेदस्य सत्त्वेन विशेषणभेदस्य संसर्गतावच्छेदकत्वाङ्गीकारेपि तद्घटस्तद्घटवानित्यादिबुद्धेः प्रमात्ववारणासम्भवात्, विशेषणनिष्ठप्रतियोगितानिरूपितत्वविशिष्टानुयोगिताया विशिष्टबुद्धिविषयत्वाङ्गीकारेणैव तद्घटस्तद्घटवानितिबुद्धेः प्रमात्वस्यावश्यं वारणीयत्वात्, स्वस्मिन् स्वप्रतियोगिकत्वविशिष्टनिरूपितसम्बन्धानुयोगिताविरहात्, तत्प्रतियोगिकत्वविशिष्टनिरूपितसम्बन्धानुयोगितायास्तदधिकरणतारूपत्वात्; घटाभावादिस्थले त्वभेदेऽप्याधाराधेयभावाङ्गीकाराद्घटाभावस्तद्वानिति प्रतीतेः प्रमात्वनिर्वाहात् । विशेषणभेदस्य सम्बन्धतावच्छेदकत्वपक्षे च घटाभावो घटाभाववानित्यादिबुद्धेः प्रमात्वानुपपत्तिः, घटाभावे तद्भेदाविरहात् ।

यत्तु- घटाभावो घटाभाववानित्यादौ घटप्रतियोगिकाभावत्वमात्रेण विशेषणत्वे तेनैव रूपेण न विशेष्यत्वम्, किन्तु घटविरोध्यभावत्वादिरूपेण, यथा हि मामहं जानामीत्यादौ रूपभेदेनैव कर्मकर्तृता, अन्यथा अत्यन्ताभेदे परसमवेतक्रियाजन्यफलवत्त्वरूपस्य कर्मत्वस्यात्मन्यसम्भवात्, तथा रूपभेदेनैव विशेष्यत्वविशेषणत्वे उक्तज्ञाने स्वीक्रियेते; उक्तकल्पनानुरोधात्; घटाभावस्तद्वानित्यादावेकरूपविशिष्टस्यैव घटाभावपदतत्पदाभ्यामुल्लेखेपि सुबर्थैकत्वादिविशेषितरूपेणैव शाब्दधीविशेष्यता, तथा च भिन्नरूपाभ्यां घटाभावादौ तद्भेदसम्भवेन भेदाविशिष्टविशेषणतासम्बन्धस्य भानाद्विशिष्टधीमात्रे भेदविशिष्टसम्बन्धस्य भाननियमो न व्याहत इति; तन्न, घटाभावत्वाद्येकरूपावच्छिन्नविशेषणविशेष्यताकप्रत्यक्षस्थले भेदभानानुपपत्तिशङ्कायामस्मदभिमतायां भिन्नरूपावच्छिन्नविशेषणविशेष्यभावस्थले समाधानस्यासङ्गतत्वात्, शाब्दबोधे मतुपा सम्बन्धिबोधनेन शङ्काया एवासङ्गतेः तत्र भिन्नरूपोपपादनस्यायुक्तत्वात् । नचैकरूपावच्छिन्नविशेषण

विशेष्यताकं तादृशप्रत्यक्षमेव न सम्भवतीति समाधानतात्पर्यान्नासङ्गतिरिति वाच्यम् ;— एतस्य शपथमात्रनिर्णेयत्वात् । किञ्च, घटाभावत्वाद्यवच्छिन्ने तदवच्छिन्नव्याप्यवत्तापरामर्शात्तदवच्छिन्नविधेयताकानुमितिः केन वार्यते ? अनुमितावुपनीतधर्मान्तरभानोपगमेपि तन्नियमासिद्धेः । एवं घटाभावस्तद्वानित्यादौ सुबर्थैकत्वमादाय समाधानमपि न युक्तम्, तथासति घटाभावस्तदभाववानित्यादिभ्रमनिवृत्तये घटाभावस्तद्वानित्यादिवाक्यप्रयोगानुपपत्तेः ; शुद्धतद्धर्मावच्छिन्नधर्मिकतदभाववत्ताज्ञाने शुद्धतद्धर्मावच्छिन्ने तन्निश्चयस्यैव प्रतिबन्धकत्वात्, तस्य तादृशवाक्याद नुत्पत्तेः । एवं घटाभावस्तदभाववानिति वादिनं प्रति घटाभावस्तद्वानिति प्रतिज्ञायामर्थान्तरम् । किञ्च परसमवेतक्रियाजन्यफलशालित्वशरीरे आत्यन्तिकभेदस्यैव घटकत्वम्, अन्यथा मामहं जानामीतिवन्मामहं गच्छामीत्यापत्तेः । घटाभावस्तद्वानित्यादौ प्रक्रान्तवाचितच्छब्दस्यैकत्वविशिष्टघटाभावपरामर्शकत्वसम्भवेन तादृशघटाभावस्यैव विशेषणत्वाद्विशेषणभेदस्य संसर्गतावच्छेदकत्वासम्भवात् । नच प्रक्रान्तत्वं समभिव्याहृतपदोपस्थाप्यत्वम्, तेन प्रत्ययान्तोपस्थाप्यैकत्वविशिष्टघटाभावस्य न तच्छब्देन परामर्श इति वाच्यम् ; सुन्दरो देवदत्तस्तमानयेत्यादौ सौन्दर्यविशिष्टदेवदत्तस्य तच्छब्देन परामर्शदर्शनेन समभिव्याहृतशब्दजन्यज्ञानविषयत्वस्यैव प्रक्रान्ततारूपत्वात् । एवं सत्ता विशिष्टसत्ता नीलो घट इत्यादौ भेदाभेदयोर्मानमङ्गीकृत्य विशिष्टशुद्धयोर्गुणगुण्यादीनां च भेदाभेदाङ्गीकारे "नैकस्मिन्नसम्भवादि" त्यधिकरणविरोधः, तत्र भावाभावरूपविरुद्धधर्माणामेकत्रासम्भवस्य प्रतिपादनात् ; इत्यलं प्रसक्तानुप्रसक्त्या ।

तस्मात् विशिष्टशुद्धयोर्भेदासम्भवाद्विशिष्टवैशिष्ट्यावगाहिज्ञानस्य विशेष्ये विशेषणमिति ज्ञानाद्वैलक्षण्यस्य विषयितावैलक्षण्यादेव वाच्यतया सन् घटः घटस्सन्निति ज्ञानयोरपि विषयितावैलक्षण्यादेव वैलक्षण्यनिर्वाहात्सत्प्रतियोगिकतादात्म्यान्तरे मानाभावादाश्रयासिद्धिर्दुर्वारा ।

यदपि—ज्ञातो घट इति प्रतीत्या ज्ञानप्रतियोगिकविषयतासम्बन्धस्य घटादौ सिद्धत्वान्नाश्रयासिद्धिः, सत्तादात्म्यं हि चिद्रूपज्ञानस्य विषयतारूपं तादात्म्यम्; अतएव घटपटादिरूपविषयभेदेन तादृशसत्तादात्म्यानन्त्यमपि प्रामाणिकम्, कपालादिनिष्ठविषयतारूपसत्तादात्म्येनावच्छिन्नस्य कपालो घटवानिति ज्ञानीयघटादिनिष्ठविषयतारूपसत्तादात्म्यस्य तन्त्वादिनिष्ठविषयतारूपसत्तादात्म्यावच्छिन्नेन घटादिनिष्ठविषयतारूपेण सत्तादात्म्येनाभेदासम्भवात्; नहि तार्किकादिभिरपि तत्तद्विषयित्वावच्छिन्नविषयितानामैक्यमुच्यते; इति। तन्न; वृत्तिज्ञानीयसम्बन्धानां विषयनिष्ठानां विशेष्यतादिरूपत्वस्यावश्यं वाच्यतया तैरेव विषयताव्यवहारनिर्वाहादुक्तसत्तादात्म्यानां विषयतारूपत्वकल्पने प्रमाणाभावात्। नच सुखादेस्साक्षिभास्यत्वेन तत्र वृत्तिविषयताविरहेण तथा विषयताव्यवहारानिर्वाहात्तत्र विषयताव्यवहारनिर्वाहाय सत्तादात्म्यस्य विषयतारूपत्वमावश्यकमिति वाच्यम्, अवच्छेदकभेदभिन्नानामनन्तानां सत्तादात्म्यानां तेषां विषयतात्वस्य च कल्पनापेक्षया सुखादिस्थलेपि वृत्तिकल्पनस्यैव युक्तत्वात्; अन्यथा सुखादिस्मरणानुपपत्तेः; वृत्तिनाशस्यैव संस्कारत्वात्; अनुमित्यादिवृत्तिनाशस्य तत्सूक्ष्मावस्थारूपस्य सुखादिविषयकत्वेन स्मृतिहेतुतायाः क्लृप्तत्वात्। नच तत्र वृत्त्यस्वीकारेपि सुखाद्यवच्छिन्नचैतन्यनाशस्यैव संस्कारत्वं सम्भवतीति वाच्यम्, तादृशचैतन्यनाशस्य सुखादिविषयकत्वस्मृतिहेतुत्वादीनां कल्पने गौरवात्; जडत्वनिरुक्तौ स्मृतिनिर्वाहार्थं सुखादिस्थलेपि वृत्तिस्वीकारावश्यकताया भवद्भिरेव प्रतिपादितत्वाच्चेति दिक्।

नच घटस्सन्निति प्रतीत्यैव सत्प्रतियोगिकतादात्म्यं घटादौ सिध्यतीति किं प्रमाणान्तरगवेषणयेति वाच्यम्, (तादृशप्रतीतौ कालसम्बन्धित्वस्यैव विषयत्वात्, अन्यथा ब्रह्म सत् सत्तादात्म्यं सदित्यादिप्रत्ययानुपपत्तेः।

किंचाविद्यानिष्ठसत्तादात्म्यस्याविद्यापरिणामे घटादौ प्रतीत्यैवोपपत्तौ तदतिरिक्तानन्तसत्तादात्म्यकल्पने प्रमाणाभावः । यत्तु घटादिरविद्यापरिणामस्तत्र सत्तादात्म्यमविद्यागतं भाति, अनाविद्यक एव वा घटादौ सत्तादात्म्यमविद्यापरिणामो जायते- स एवाविद्यायां भातीत्यत्र विनिगमनाविरहः, "मायांतु प्रकृति" मित्यादिश्रुतेस्सत्तादात्म्यविशिष्टजन्यमात्रं मायोपादानकमित्यर्थसम्भवादिति । तन्न; घटादिगतसत्तादात्म्यस्याविद्यायां भानेऽन्यथाख्यात्यापत्तिवारणायानन्तघटादितादात्म्यमविद्यायां स्वीकृत्य स्वाश्रयतादात्म्यसम्बन्धेन घटादिगतसत्तादात्म्यस्याविद्यायां भानोपगमावश्यकतया गौरवात् । नच भवतामप्यविद्यागततादात्म्यस्य घटादौ भाने ऽन्यथाख्यात्यापत्तिरिति स्वाश्रयतादात्म्येन भानोपगमावश्यकत्वाद्गौरवमिति वाच्यम् ; कार्यकारणयोरभेदेन कारणगतधर्मस्य कार्ये भाननिर्वाहात् । उक्तं हि त्वयैव गुर्व्याम् - " मूलाविद्यायां घटत्वादेरुत्तरकालावच्छेदेन सम्बन्धो घटाद्युत्पत्तिः, कापालिकत्वादिसम्बन्धो घटादिनाश" इति । 'घटकपालयोस्समसत्ताकभेदे गुरुत्वभेदात्तत्कार्यावनतिविशेषाद्यापत्ति' रिति च । एवं परिच्छिन्नत्वविचारे- " अनात्ममात्रं विनाशि , अविद्यानाशस्यैवानात्ममात्रनाशत्वकल्पनान्नाकाशादिव्यक्तिनाशकल्पनागौरवमि" ति ।

किञ्च भवदभिमतं तादात्म्यं दुर्निरूपम् । यत्तु—तादात्म्यं विशेषणविशेष्याभ्यामतिरिक्तं पदार्थान्तरं नैयायिकमते समवायवदिति । तन्न; तादृशतादात्म्यस्य प्रतियोग्यनुयोगिभ्यां सम्बन्धान्तरकल्पने तादृशसम्बन्धान्तरस्यापि प्रतियोग्यनुयोगिभ्यां सम्बन्धान्तरं तस्यापि तथेत्यनवस्थाप्रसङ्गात् । यदि च तादात्म्यद्वयमभ्युपगम्यते, तयोश्च परस्परं सम्बन्धता स्वीक्रियते तदा अन्योन्याश्रयः । तादात्म्यत्रयस्वीकारे च चक्रकप्रसङ्गः । तादात्म्यस्य प्रतियोग्यनुयोगिभ्यां स्वरूपमेव सम्बन्ध इत्यभ्युपगमे चात्माश्रयः ।

यत्तु- तादात्म्यमेकं सम्बन्धिभ्यामतिरिक्तं तथैव प्रतीयमानत्वात् कल्प्यते, तस्य चासम्बद्धस्य सम्बन्धतानुपपत्त्या सम्बन्धान्तरोपगमे

अन्योन्याश्रयादिगयाद्गौरवाच्च स्वत एव घटादिसम्बन्धत्वमुपेयते, स्वतो व्यावृत्तविशेषवत , तत्र चात्माश्रयदोषो गत्यन्तराभावाल्लाघवाच्च सह्यते, अतएव बौद्धाधिकारे शिरोमणिना घटाभावस्य स्ववृत्तित्वस्वीकारे आत्माश्रयेपि लाघवमुक्तमिति । तन्न; तावात्म्यं पदार्थान्तरमभ्युपगम्य तस्य स्वतस्सम्बन्धत्वे आत्माश्रयस्येष्टत्वाभ्युपगमापेक्षया विशेषणस्वरूपस्यैव तथाङ्गीकारस्य युक्तत्वात् , विशेषणविशेष्याभ्यामतिरिक्तसम्बन्धस्य "समवायाभ्युपगमाच्च साम्यादनवस्थिते" रिति सूत्रकारैरेव निरस्तत्वाच्च ।

यदपि विशिष्टशुद्धोपहिता ब्रह्मसत्तैव विशिष्टशुद्धयोस्तादात्म्यम्, नीलघटयोरपि सैव तादात्म्यम् , एकदेशस्थोपाध्योर्भेदकत्वाभावेन विशिष्टशुद्धोपहितायाः नीलघटाद्युपहितायाश्च सत्ताया ऐक्यात् , भिन्नत्वे सत्यभिन्नसत्ताकत्वं तादात्म्यमिति तल्लक्षणात् , सत्ता विशिष्टसत्ता नीलो घट इत्यादिप्रत्यये तादृशतादात्म्यस्यैव भानमिति । तन्न; तथासत्येकदेशस्थानां रूपरसादीनामपि तादात्म्यापत्त्या रूपं रस इति समानाधिकरणप्रत्ययापत्तेरिति ।

एवं ब्रह्मणि बाधवारणाय चिद्भिन्नत्वनिवेशनमित्यप्ययुक्तम्; चिन्निष्ठप्रतियोगिताकभेदस्य चिद्घटोभयादिभेदरूपस्य ब्रह्मण्यपि सम्भवात् । चित्त्वपर्याप्तावच्छेदकताकप्रतियोगिताकभेदनिवेशेपि घटत्वेन चित्त्ववान्नेति प्रतीतिसाक्षिकभेदस्य व्यधिकरणधर्मावच्छिन्नावच्छेदकताकस्य ब्रह्मण्यपि सम्भवेन तदव्यावृत्तेः । नच चित्त्वनिष्ठावच्छेदकता निरवच्छिन्ना ग्राह्येति न दोष इति वाच्यम् , तथापि चित्त्वावच्छिन्नघटनिष्ठप्रतियोगिताकस्य चित्त्वेन घटो नेति प्रतीतिसाक्षिकस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकभेदस्यावारणात् ; चित्त्वावच्छिन्नचिन्निष्ठप्रतियोगिताकभेदनिवेशेपि चित्त्वेन चिद्घटोभयं नेति प्रतीतिविषयभेदाव्यावृत्तेः । नच तादृशभेदस्य न चित्त्वपर्याप्तावच्छेदकताकप्रतियोगिताकत्वम्, किन्तु चित्त्वतादृशोभयत्वैतदुभयपर्याप्तावच्छेदकताकप्रतियोगिताकत्वमिति प्रतियोगितावच्छे

कतापर्याप्तिनिवेशादेव तद्व्यावृत्तिः, अथवा तादृशभेदप्रतियोगिताया उभयपर्याप्तत्वस्वीकाराच्चित्त्वावच्छिन्नचित्पर्याप्तप्रतियोगिताकभेदनिवेशाद्व्यावृत्तिरिति वाच्यम् ;- विशिष्टशुद्धयोर्भेदस्य भदन्मतसिद्धतया चित्त्वविशिष्टप्रतियोगिकभेदस्य चित्त्वपर्याप्तनिरवच्छिन्नावच्छेदकताकचित्पर्याप्तप्रतियोगिताकत्वेन तादृशभेदस्य शुद्धचित्साधारण्यात् । नच चित्त्वोपलक्षितप्रतियोगिकभेद एव निवेश्यते, तन्निवेशश्च स्वपर्याप्तावच्छेदकताकत्वस्वावृत्तित्वोभयसम्बन्धेन चित्त्वविशिष्टा या प्रतियोगिता तन्निरूपकत्वेन, तथाच विशिष्टप्रतियोगिकभेदोपलक्षितप्रतियोगिकभेदयोर्वैलक्षण्यानिर्वाहाय विशिष्टभेदीय प्रतियोगिताया विशेषणविशेष्योभयवृत्तित्वस्वीकारादुक्तरीत्या निवेशे तद्व्यावृत्तिरिति वाच्यम् ;- एवमपि प्रातिभासिकचिद्भेदाव्यावृत्तेः । स्वसमानसत्ताकचिद्भेदनिवेशेपि अभावस्याधिकरणस्वरूपत्वेन पारमार्थिके ब्रह्मनिष्ठे घटादिभेदे चित्त्वावच्छिन्नप्रतियोगिताकत्वस्य घटत्वावच्छिन्नप्रतियोगितायां वा चित्त्वावच्छिन्नत्वस्य घटत्वनिष्ठावच्छेदकतायां वा चित्त्वपर्याप्तत्वस्य भ्रमसम्भवेन तत्तद्भ्रमविषयीभूतभेदानामव्यावृत्तेः । अभावस्याधिकरणस्वरूपत्वाभावपक्षेपि " आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्मा अपृथक्त्वेपि पृथगिवावभासन्त " इति पञ्चपादिकानुरोधेनानन्दादीनां शुद्धस्वरूपत्वस्य तद्धर्मत्वस्य चाङ्गीकारेण तादृशधर्मे स्वसमानसत्ताके चित्त्वावच्छिन्नप्रतियोगिताकभेदत्वादिभ्रममादाय दोषसम्भवात् । स्वसमानसत्ताकभेदवत्त्वानिवेशेनैव ब्रह्मव्यावृत्त्या भेदे चित्प्रतियोगिकत्वानिवेशवैयर्थ्यात् । ब्रह्मप्रमेत्यादिविशेषणद्वयवैयर्थ्यस्य पूर्वमुक्तत्वात् । सत्ताद्वैविध्यस्य द्वैतमतासिद्धत्वेन सन्दिग्धासिद्धेश्च ।

(किञ्च 'शुद्धब्रह्मणो निर्धर्मकत्वादभावप्रतियोगित्वं नास्ती' त्यस्य द्वितीयमिथ्यात्वे ऽद्वैतसिद्धावेव वक्ष्यमाणतया शुद्धनिष्ठप्रतियोगिताकभेदनिवेशो न सम्भवत्येव । नच शुद्धे सत्यादिपदवाच्यसम्बन्धाज्ञानविषयत्वादिवत् प्रतियोगित्वमपि सम्भवत्येव, तदन्यधर्मराहित्यस्यैव निर्धर्मकत्व

रूपत्वादिति वाच्यम्; शुद्धे धर्मास्वीकारपक्षे उपहित एवोक्तसम्बन्धादेः स्वीकारात्। शुद्धस्य जगदुपादानत्वपक्षे तत्र धर्माणामङ्गीकारेपि न चिन्निष्ठ प्रतियोगिताप्रसिद्धिः, तत्पक्षे आध्यासिकसम्बन्धातिरिक्तसम्बन्धेन स धर्मकं यत्तद्भिन्नत्वं निर्धर्मकत्वमिति स्वीकारेण स्वरूपसम्बन्धेन चिन्निष्ठ प्रतियोगितायास्तावताप्यप्रसिद्धेः । उक्तं हि गुर्व्याम् - "ब्रह्माभावो ऽप्र सिद्ध एव; प्रत्यक्षाभावात् । घटस्सन्नित्यादिप्रत्यये उपहितब्रह्मण एवै- न्द्रियकत्वात् अभावांशे निरवच्छिन्नप्रकारताकज्ञानासम्भवेन केवलप्रति योगिकाभावभानायोगात् प्रतियोगिविशेषिताभावभानन्तु विशिष्टवैशिष्ट्य बोधमर्यादां नातिशेत इति नियमात्, अनुमानस्य चाप्रयोजकत्वा" दिति। अखण्डार्थत्वविचारे लघ्व्यां " अवच्छिन्नत्वाविशेषितप्रतियोगितासम्बन्धेन शुद्धस्य भेदांशे स्वरूपतो भानं युज्यते, अभावधियो विशिष्टवैशिष्ट्यावगा हित्वनियमे मानाभावादि " ति यदुक्तं तत्तूदाहृतस्वोक्त्यैव विरुद्धमिति ।

यदपि विमतपदं संशयविशेषविषयपरम्, तथाच ब्रह्मप्रमेत्याद्यनु गतधर्मावच्छिन्नविशेष्यकसंशयः पृथिवीत्वजलत्वादिरूपनानाधर्मावच्छिन्न विशेष्यकसमूहालम्बनसंशयो वा विषयतासम्बन्धेन पक्षतावच्छेदक इति कल्पान्तरम्; तदपि न, ब्रह्मप्रमेत्याद्यनुगतरूपावच्छिन्नविशेष्यकसंशयापे- क्षया तादृशरूपस्यैव लघुत्वेन पक्षतावच्छेदकत्वसम्भवादितरांशोपादानस्या नतिप्रयोजनकत्वात् । नच तद्व्यक्तित्वेन तादृशसंशयस्य पक्षतावच्छेदक त्वान्न गौरवावकाश इति वाच्यम्, पुरुषभेदेन कालभेदेन च भिन्नानां तादृशसंशयव्यक्तीनां मध्ये एकस्यास्तद्व्यक्तित्वेन पक्षतावच्छेदकत्वन्ना- न्यस्या इत्यत्र विनिगमकाभावात्; न्यायप्रयोगे तदादिशब्देन पक्षादिनिर्देश स्यासाम्प्रदायिकताया भवद्भिरेवासकृदावेदितत्वात् ।

इति शेषकुलतिलकस्य यादवाचलनिवासरसिकस्यानन्ताचार्यस्य
कृतौ न्यायभास्करे पक्षतावच्छेदकनिर्वचनभङ्गः प्रथमः ।

——(*)——

## सदसद्विलक्षणत्वरूपमिथ्यात्वभङ्गः ।

शेषश्श्रीमान्निगममकुटीयुग्मरक्षाप्रवृत्तः श्रीमद्रामावरजमुनितां रम्यजामातृतां च ।
छिन्दन् दृप्यद्विमतपटलीपाटनोद्दामसूक्तिर्भूयाद्भव्यप्रथितमहिमा श्रेयसे भूयसे नः ॥

साध्यभूतमपि मिथ्यात्वं न तावत्सदसद्विलक्षणत्वम्, सत्त्वासत्त्वयोः परस्परविरहरूपत्वेन तन्निषेधयो रजतभिन्नत्वरजतत्वयोर्निषेधवत् परस्परव्याघातेनैकानुमितिविधेयत्वासम्भवात्; अनुमितेश्चानाहार्यत्वनियमात् ।

यत्तु सत्त्वमबाध्यत्वम्, स्वप्रकारकधीविशेष्यताव्यापकीभूताभावाप्रतियोगित्वम्, तद्विलक्षणत्वं च स्वप्रकारकधीविशेष्यताव्यापकीभूताभावप्रतियोगित्वपर्यवसितम्, एवमसत्त्वं सत्तादात्म्यानाधिकरणत्वम्, तद्विलक्षणत्वं च सत्तादात्म्यवत्त्वपर्यवसितम्, तथाच स्वप्रकारकधीविशेष्यताव्यापकीभूताभावप्रतियोगित्वसत्तादात्म्योभयं साध्यम्; एवंच न व्याहतिः, सत्वासत्त्वयोः परस्परविरहरूपत्वाभावात्; शुक्तिरूप्ये स्वप्रकारकधीविशेष्यताव्यापकीभूताभावप्रतियोगित्वस्य सत्तादात्म्यस्य च सत्त्वान्न साध्यविकलता दृष्टान्तस्येति । तन्न, दृष्टान्तपक्षसाधारणस्यैकस्य स्वत्वस्याभावेन स्वपदेन पक्षोपादाने दृष्टान्ते साध्यवैकल्यस्य दृष्टान्तस्योपादाने पक्षे बाधस्य च दुर्वारत्वात् । नच स्वपदेन पक्षोपादानेपि न साध्यवैकल्यम्, पक्षप्रकारकधीविशेष्यताव्यापकत्वस्य शुक्तिरूप्याभावे सत्त्वात्; एवं दृष्टान्तोपादानेपि न बाधः, तत्प्रकारकधीविशेष्यताव्यापकत्वस्य पक्षाभावे सत्त्वात्; इति वाच्यम्; - तथासति विशेष्यताव्यापकाभावप्रतियोगित्वमात्रस्य साध्यघटकत्वसम्भवेन स्वप्रकारकधीपर्यन्तस्य व्यर्थत्वात् । अखण्डाभावघटकतया तत्सार्थक्येप्यर्थान्तरात्, अन्यप्रकारकधीविशेष्यताव्यापकत्वस्यान्याभावे सिद्धावपि सत्यत्वाविघातात् । नच स्वप्रकारक

धीविशेष्यताविशिष्टत्व तादात्म्योभयसम्बन्धेन किंचिद्विशिष्टत्वमेव सदसद्विलक्षणत्वम्, विशेष्यतावैशिष्ट्यं च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन, स्वाधिकरणता स्वरूपसम्बन्धावच्छिन्ना, भेदप्रतियोगितावच्छेदकता च सत्तादात्म्यसमानाधिकरणस्वनिष्ठप्रतियोगिताकाभाववत्तासम्बन्धावच्छिन्ना, तथाच दृष्टान्तपक्षोभयानुगतस्यैकस्य स्वत्वस्याभावेपि न क्षतिरिति वाच्यम् ; — तथासत्यपसिद्धान्तात्, अत्यन्ताभेदे तादात्म्यादिसम्बन्धानङ्गीकारात् । उक्तं हि लघुचन्द्रिकायां " भेदासहिष्णु च तादात्म्यं नास्त्येव, अत्यन्ताभेदे तादात्म्यादिसम्बन्धासम्भवा " दिति ।

नच निरुक्तपक्षतावच्छेदकावच्छिन्ने घटत्वाद्यवच्छिन्नस्य भेदोऽस्त्येव, द्रव्यत्वोपहितघटत्वोपहितयोरिव तत्सम्भवात्, तथाच तादात्म्यसम्भवः, यद्वा— आधेयत्व- स्वप्रतियोगित्वोभयसम्बन्धेनाभावविशिष्टत्वमेव सदसद्विलक्षणत्वम्, आधेयताच स्वप्रकारकधीविशेष्यताविशिष्टत्वसम्बन्धावच्छिन्ना, विशेष्यतावैशिष्ट्यं च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन, स्वाधिकरणता भेदप्रतियोगितावच्छेदकता च स्वरूपसम्बन्धावच्छिन्ना, तथाच नाननुगम इति वाच्यम्;- एवमपि जगतो गगनादिवदवृत्तित्वमादाय साध्यपर्यवसानसम्भवेन मिथ्यात्वासिद्ध्या अर्थान्तरस्य दुर्वारत्वात् । नच वृत्तिमत्त्वं पक्षतावच्छेदककोटौ निवेश्यार्थान्तरवारणं सम्भवतीति वाच्यम् ; तथासति वृत्तिमत्त्वविशेषणेनैवासद्ब्रह्मणोर्बाधवारणसम्भवेन पक्षांशे सत्तादात्म्यस्य चिद्भिन्नत्वस्य च व्यर्थतापत्तेः । नच स्वाधिकरणताव्यापकाभावप्रतियोगित्व- सत्तादात्म्योभयस्य साध्यत्वाङ्गीकारान्नावृत्तित्वमादायार्थान्तरम्, आवृत्तेरधिकरणाप्रसिद्धेरिति वाच्यम्;—असत्त्वमादायार्थान्तरवारणायोपात्तस्य साध्यकोटिप्रविष्टस्य सत्तादात्म्यवत्त्वस्य व्यर्थत्वापत्तेः, असतोऽधिकरणाप्रसि-

द्धेः । वस्तुतस्त्वत्र- स्वप्रकारकधीविशेष्यताऽव्यापकाभावप्रतियोगित्वमात्रस्य साध्यत्वेपि नासत्त्वमादायार्थान्तरप्रसक्तिः, पक्षतावच्छेदककोटौ सत्तादात्म्यस्य प्रविष्टत्वेन तादृशसत्तादात्म्यविशिष्टे स्वप्रकारकधीविशेष्यताऽव्यापकीभूताभावप्रतियोगित्वस्यानुमित्यावगाहनेनानुमितेरसत्त्वे पर्यवसानासम्भवात् ।

ननु पृथिवीत्वजलत्वाद्यवच्छिन्नधर्मिकसमूहालम्बनसंशयस्य तद्व्यक्तित्वेन पक्षतावच्छेदकत्वपक्षे पक्षांशे सत्तादात्म्यस्यानिविष्टतया साध्यकोटौ सत्तादात्म्यानिवेशेऽसत्त्वमादायार्थान्तरमिति तद्वारणाय तन्निवेशनमावश्यकमिति चेत् ? तर्हि सत्तादात्म्यघटितपक्षतावच्छेदकावच्छिन्ने कस्य साध्यता? केवलस्वप्रकारकधीविशेष्यताऽव्यापकीभूताभावप्रतियोगित्वस्येति चेत् ? तथा सत्यसति बाधाप्रसक्त्या पक्षकोटौ सत्तादात्म्यविशेषणस्य बाधवारकतया सार्थक्यप्रतिपादनमनुचितम् , किन्तु केवलस्वप्रकारकधीविशेष्यताऽव्यापकाभावप्रतियोगित्वस्य साध्यत्वे ऽसत्त्वमादायार्थान्तरवारणाय पक्षकोटौ सत्तादात्म्यनिवेशनमिति वक्तुमुचितम् । अत एव दीधितौ तर्कग्रन्थे धूमो यदि वह्न्यसमवहिताजन्यत्वे सति वह्निसमवहिताजन्यः स्यान्नोत्पन्नस्स्यादिति मूलोक्ततर्के विपर्यये वह्न्यसमवहितजन्यत्वे पर्यवसानवारणेन वह्निसमवहितजन्यत्वमात्रपर्यवसायितानिर्वाहाय वह्न्यसमवहिताजन्यत्वेन पक्षो विशेषणीय इत्युक्तम् । यदि चोक्तरीत्या अर्थान्तरवारकतयैव पक्षकोटौ तद्विशेषणसार्थक्यमङ्गीकृत्य साध्यकोटौ तत्परित्यागः क्रियते, तदा द्वितीयमिथ्यात्वे वक्ष्यमाणा दोषा इहानुसन्धेयाः ।

किंच सत्तादात्म्यघटितपक्षतावच्छेदकावच्छिन्ने सदसद्विलक्षणत्वस्य साध्यत्वाङ्गीकारोनुचित एव, तथाङ्गीकृतं हि लघुचन्द्रिकायाम् । तत्र माध्वमते शुक्तिरूप्यादाविदं रूप्यं सदित्याकारकभ्रमेण तत्र सत्प्रतियोगिकतादात्म्यावगाहनान्माध्वादीन् प्रति न्यायप्रयोगे बाधः- सत्तादात्म्यघटितपक्षतावच्छेदकाक्रान्ते शुक्तिरूप्ये सदसद्विलक्षणत्वरूपसाध्यस्याभावादित्याशंक्य,

माध्वैरनिर्वचनीयख्यात्यनभ्युपगमेनेदं रूप्यं सदिति भ्रमेपि तत्र सत्ताः
दात्म्याभावात् असत एव सत्तादात्म्यस्यासति शुक्तिरूप्ये भानाङ्गीकारा
त्तस्योक्तपक्षतावच्छेदकाक्रान्तत्वाभावान्न बाध इति परिहारस्य कृतत्वात् ।
अत्र माध्वान् प्रति न्यायप्रयोगे बाध इत्यपि न युक्तम्, यत्र मत
द्वये साध्यविरहस्तत्रैव बाधस्य वक्तव्यत्वात्; यथा चिद्भिन्नत्वानुपादाने
ब्रह्मणि बाधः । शुक्तिरूप्येतु माध्वमते साध्यविरहेपि स्वमते तस्या
ळीकत्वास्वीकारेण साध्याबाधात्स्वयमनुमानेन तं प्रति साध्यस्य साध
यितुं युक्तत्वात् । अन्यथा वियदादिप्रपञ्चे सत्यतासाधने परमतरीत्या
बाधप्रसङ्गात् । प्रतिवादिरीत्या बाधस्य विजिगीषुकथासामान्ये सत्त्वेन
तादृशानुमानमात्रोच्छेदापत्तेः । माध्वमते सत्तादात्म्यरूपपक्षतावच्छे
दकाक्रान्तत्वे, सत्तादात्म्यरूपासद्भिलक्षणत्वघटितसाध्यस्य तत्र बाधोक्तेर्व्या-
हतत्वाच्च ।

एतेन स्वप्रकारकधीविशेष्यताव्यापकीभूताभावप्रतियोगित्व-कालसम्ब
न्धित्वोभयं साध्यमित्यपि निरस्तम्, अवृत्तित्वमादाय साध्यपर्यवसान
सम्भवेनार्थान्तरादेर्दुर्वारत्वात् । नचावृत्तित्वस्य प्रत्यक्षबाधितत्वात् तत्र
पर्यवसानं न सम्भवतीति वाच्यम्;- असत्त्वस्यापि प्रत्यक्षबाधितत्वेन
तत्र पर्यसानासम्भवेन तादृशार्थान्तरवारणायोपात्तस्य सत्तादात्म्यवत्त्वस्य
व्यर्थत्वात् ।

यदपि- सद्भेदासद्भेदोभयं वा साध्यम्; तत्र सत्त्वावच्छिन्नभेदस्य
न ज्ञानानिवर्त्यत्वरूपसत्त्वावच्छिन्नप्रतियोगिताकभेदत्वेन निवेशः, तथा
सति असद्भेदस्य ज्ञाननिवर्त्यत्वेतरांशस्य वा वैयर्थ्यात्, ज्ञानोच्छेद्यत्व
रूपज्ञाननिवर्त्यत्वस्य वक्ष्यमाणरीत्या सर्ववादिसम्मतस्यैकस्याभावेन तद-
भावस्यैकरूपत्वाभावात्, ज्ञानानिवर्त्यरूपसद्भेदनिवेशेऽस्मन्मते ब्रह्ममात्रवि-
षयकतत्तद्धीविषयत्वस्य लघोरेवावच्छेदकत्वसम्भवेन तत्समनियतस्य
ज्ञानानिवर्त्यत्वस्य प्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नप्रतियोगिताक

भेदाप्रसिद्धेश्च ; नाप्युक्तधीविषयत्वावच्छिन्नप्रतियोगिताकभेदत्वेन , सिद्ध साधनापत्तेः; किन्तु सत्यं सर्वं वाच्यमित्याकारकस्य पराभ्युपगतस्य कस्य चित् ज्ञानस्य यद्विषयत्वं तद्व्यक्त्यवच्छिन्नप्रतियोगिताकभेदत्वेन सद्भेदस्य तद्व्यक्त्यभावत्वेन सत्त्वाभावस्य वा निवेशः, तादृशज्ञाने चास्मदभ्युपगतबाध्यत्वविरोध्यलीकव्यावृत्तसत्यत्वप्रकारकत्वं परैः स्वीक्रियत इति तदीयमुख्यविशेष्यताव्यक्तेरत्यन्ताभावादिसाधने सिद्धसाधनं तैर्वक्तुमशक्यं; मुख्यविशेष्यतात्वं च प्रकारतासांसर्गिकविषयतान्यविषयतात्वम् , तच्च विशेष्यताविशेष इव निर्विकल्पकज्ञानीयतुरीयविषयतायामप्यस्तीति परमते आद्यस्य मन्मते द्वितीयस्य सङ्ग्रहः; मन्मते सत्यादिसमानाधिकरणनामभिस्सत्यत्वाद्युपलक्षितशुद्धब्रह्मणो निर्विकल्पकधीरेव जायत इति तदीय विषयतालाभः, सर्वपदमहिम्ना सत्यत्वव्यापकविषयतालाभः, तेन यत्किंचित्सत्यनिष्ठविषयतायाः कुत्रचित्सत्ये अभावमादाय न परेषां सिद्धसाधनम् ; वाच्यत्वेनोपलक्षितं शुद्धब्रह्मापि भवति, विशिष्टब्रह्मनिष्ठस्य तस्य विशेष्यभूतशुद्धेपि सत्त्वात् ; वाच्यत्वस्थाने ज्ञेयत्वं वा निवेश्यम् ; तज्ज्ञानीयमुख्यविशेष्यतानिष्ठानवच्छिन्नावच्छेदकताकप्रतियोगितानिरूपकभेदत्वेन मुख्यविशेष्यतासम्बन्धावच्छिन्नतज्ज्ञानव्यक्तित्वावच्छिन्नप्रतियोगिताकात्यन्ताभावत्वेन वा निवेशान्न व्यापकत्वादिनिवेशकृतगौरवादिकमिति । तन्न; ब्रह्ममात्रविषयकतत्तद्धीविषयत्वस्य ज्ञानानिवर्त्यत्वापेक्षया लघुत्वेपि तुच्छसाधारणज्ञानानिवर्त्यत्वसमनैयत्यविरहेण ज्ञानानिवर्त्यत्वस्य भेदप्रतियोगितावच्छेदकत्वासम्भवकथनानौचित्यात् ।

नच ब्रह्मतुच्छोभयमात्रविषयकधीविषयत्वस्य ज्ञानानिवर्त्यत्वसमनियतत्वात् तदपेक्षया लघुत्वाच्च ज्ञानानिवर्त्यत्वस्यावच्छेदकत्वासम्भवकथनं युज्यत इति वाच्यम् ;- तुच्छस्य विकल्पाख्यवृत्तिविषयत्वेपि धीविषयत्वाभावात् ; ब्रह्मणश्च तादृशवृत्तिविषयत्वाभावेनोभयोरेकज्ञानविषयत्वासम्भवात् ।

नचैवमपि ब्रह्ममात्रविषयकधीविषयत्व- तुच्छविषयकविकल्पाख्यवृत्ति विशेषविषयत्वान्यतररूपलघुधर्मसमनियतगुरुधर्मत्वाज्ज्ञानानिवर्त्यत्वस्य न प्रतियोगितावच्छेदकत्वसम्भव इति वाच्यम् ;—विकल्पाख्यवृत्तित्वस्याप्यनुगतानतिप्रसक्तस्य लघुभूतस्याभावेन तद्घटितस्यानेकभेदघटितस्य च उक्तान्यतरत्वस्य ज्ञानानिवर्त्यत्वापेक्षया लघुत्वासम्भवात् । ज्ञाननिवर्त्यत्व सामान्याभावस्य स्वरूपतस्तद्व्यक्तित्वेन वा अवच्छेदकत्वे गौरवाप्रसक्तेश्च । ज्ञाननिवर्त्यत्वाभावस्य स्वरूपतोवच्छेदकत्वस्य द्वितीयमिथ्यात्वे भवद्भिरेवोक्तत्वात् । ज्ञाननिवर्त्यत्वस्य च वक्ष्यमाणरीत्यानुगमसम्भवाच्च ।

किन्त्वित्यादिकमप्ययुक्तम् , स्वमतसिद्धब्रह्ममात्रविषयकनिर्विकल्पकबोधीयविषयत्व- द्वैतमतसिद्धसर्वप्रपञ्चविशेष्यकसत्यत्वधर्मितावच्छेदकक वाच्यत्वप्रकारबोधीयमुख्यविशेष्यतयोस्सत्यं सर्वं वाच्यमिति वाक्यजन्य बोधीयप्रकारताविशेष्यताभिन्नविषयतात्वेनानुगतरूपेण निवेशं सम्पाद्य तादृशविषयतानिष्ठनिरवच्छिन्नावच्छेदकताकभेदस्य सद्वैलक्षण्यपदार्थत्वे, तादृश विषयताया जात्यखण्डोपाध्यतिरिक्ततया स्वरूपतोवच्छेदकत्वासम्भवात्तादृश विषयतानिष्ठनिरवच्छिन्नावच्छेदकत्वाप्रसिद्ध्या साध्याप्रसिद्धेः ।

नच सत्यत्वव्यापकतावच्छेदकं यत्तादृशज्ञानीयविशेष्यतावृत्तिरूपं तदवच्छिन्नावच्छेदकताकभेदत्वेन सद्भेदस्य निवेशान्न दोष इति वाच्यम्;— तथा सति सत्यत्वावच्छिन्नभेदत्वेनैव निवेशौचित्यात्सत्यत्वस्य मिथ्यात्वाभावरूपत्वेनात्माश्रयात् । स्वमते ब्रह्मनिष्ठतद्व्यक्तित्वापेक्षया तादृशविषयतात्वविशिष्टस्य गुरुत्वेन सत्यत्वव्यापकतावच्छेदकीभूततादृशविषयतात्वावच्छिन्नावच्छेदकताकभेदाप्रसिद्ध्या साध्याप्रसिद्धेश्च । ब्रह्मनिष्ठतादृशबोधीय मुख्यविशेष्यतायाः स्वरूपतोवच्छेदकत्वोपपत्त्या साध्याप्रसिद्धिवारणे च सिद्धसाधनस्य दुर्वारत्वात् , तादृशबोधीयविशेष्यताया विशेष्यभेदेन भिन्न तया घटादिनिष्ठा या तादृशबोधीयमुख्यविशेष्यता तन्निष्ठानवच्छिन्नाव-

च्छेदकताकभेदस्य पटादौ द्वैतवादिभिरभ्युपगमात् । भवन्मते ब्रह्मनिष्ठाया स्तादृशविशेष्यतायाः स्वरूपतोवच्छेदकत्ववद्घटादिनिष्ठायास्तस्या अपि स्वरूपतोवच्छेदकत्वसम्भवात् ।

नच तादृशवाक्यजन्यबोधीयतादृशविषयतानिष्ठनिरवच्छिन्नावच्छेदकताकभेदकूटवत्त्वस्यासद्वैलक्षण्यसहितस्य साध्यत्वांगीकारान्न सिद्धसाधनम् , पटे पटनिष्ठतादृशविषयतानिष्ठनिरवच्छिन्नावच्छेदकताकभेदाभावेन उक्तकूट वत्त्वघटितसाध्यस्याभावादिति वाच्यम् ;—स्वमते तादृशज्ञानविशेष्यत्व स्यैकत्वेन तादृशभेदकूटस्याप्रसिद्ध्या साध्याप्रसिद्ध्यापत्तेः । नच स्व मतेऽपि तादृशवाक्यजन्यानामेव ब्रह्मविषयकनिर्विकल्पात्मकबोधानां बहूनां सम्भवात्तत्ज्ञानविशेष्यत्वावच्छिन्नभेदकूटप्रसिद्धिम्सभवः, अथवा तादृश ज्ञानीयमुख्यविशेष्यतात्वसमानाधिकरणानवच्छिन्नावच्छेदकताकभेदत्वव्याप-काषेयतानिरूपकताया एव साध्यत्वान्न सिद्धसानम् , नापि स्वमते अप्रसिद्धिः, इति वाच्यम् ;—लक्षणाग्रहादिना तादृशवाक्यजन्यबोधविशे ष्यत्वस्य प्रपञ्चे भवन्मतेपि सम्भवेन तादृशविशेष्यतानिष्ठानवच्छिन्ना वच्छेदकताकभेदकूटसाधने बाधापत्तेः । नच लक्षणाग्रहाजन्यतादृश वाक्यजन्यबोधीयमुख्यविशेष्यतानिष्ठानवच्छिन्नावच्छेदकताकभेदकूटस्य सा-ध्यघटकत्वान्नानुपपत्तिरिति वाच्यम् ; — स्वमतसिद्धस्य निर्विकल्पकबोध स्यासंग्रहेण साध्याप्रसिद्धेर्दुर्वारत्वात् , तादृशबोधस्य विशिष्टवाचकानां सत्यादिपदानां स्वरूपे लक्षणाग्रहजन्यत्वात् ।

यदि च सत्यादिपदलक्षणाग्रहजन्यो नोक्तनिर्विकल्पकबोधः, किन्तु शक्तिग्रहजन्य एव, विशिष्टवाचकानां पदानामेकदेशपरित्यागेपि विशे-ष्ययोरशक्त्युपस्थितयोरेवाभेदान्वयाविरोधात् ; यत्र शक्यतावच्छेदकभिन्न रूपेणोपस्थितिस्तत्रैव लक्षणायास्सर्वसिद्धत्वात् , प्रकृते च शक्यस्वरूप मात्रोपस्थित्या लक्षणाविरहात् , अतएव आनन्दमयाधिकरणश्रीभाष्ये " अर्थान्यैन समानाधिकरणप्रवृत्तानामेकार्थप्रतिपादनपरतया विशेषणांशे

तात्पर्यासम्भवादेव विशेषणनिवृत्तेः वस्तुमात्रैकत्वप्रतिपादनान्न लक्षणा प्रसङ्ग" इत्यनूदितमित्युच्यते; तदापि भवन्मते सत्यं सर्वं वाच्यमिति वाक्यजन्यसप्रकारकबोधीयविषयत्वस्याप्युक्तानुगतरूपाक्रान्ततया तादृश विशेष्यतायाश्च सत्यत्वोपहित एव सत्त्वात्तत्र तादृशविशेष्यतानिष्ठावच्छे-दकताकभेदघटितकूटाभावेन पक्षतावच्छेदकाक्रान्ते तत्र बाधो दुर्वारः, तद्धर्म प्रकारकप्रतीतौ तद्धर्मोपहितस्य विषयत्वं नतु शुद्धस्येति भवतां सिद्धान्तात्।

(ननूपहितविषयकबोधोपि लक्षणाधीन एव, पदानां विशिष्ट एव शक्तिरित्यद्वैतसिद्धान्तात् , अन्यथा तत्त्वमसीत्यादावपि घटो द्रव्यमित्यादा विवोपहितयोरैक्यबोधसम्भवेन लक्षणाकल्पनस्यान्याय्यतापत्तेः; उक्तं च गुर्व्याम्- " विशिष्टान्वयधीत्वेन मुख्यवृत्तिज्ञानकार्यता, उपहितान्वयधीत्वेना मुख्यवृत्तिज्ञानकार्यता, अतएव लोहितोष्णीषा इत्यादौ सर्वत्र विशिष्टान्वय एवौत्सर्गिकः, अतएव घटो द्रव्यमित्यादावप्यमुख्यवृत्त्यैवोपहितान्वय " इति; इतिचेन्न;– " पदानामुपहित एव शक्तिः, उपहितशक्तेरेव विशिष्टेपि सत्त्वाद्यदा विशेषणेपि पदार्थान्तरान्वयतात्पर्यं तदा विशिष्टबोधः, नोचेदुप हितबोध " इति नव्यमतस्य गुर्व्यामेवोक्तत्वात् । तत्त्वमसीत्यादौ तु तात्पर्यानुपपत्त्यैव लक्षणादर इति ।)

यत्तु पदार्थतावच्छेदकविशिष्टपरत्वशून्यतद्वाक्यतात्पर्यविषयलक्षणा ग्रहाजन्यबोधविषयतानिष्ठानवच्छिन्नावच्छेदकताकभेदनिवेशान्नोक्तबाधः, तादृशवाक्यजन्यस्य निर्विकल्पकबोधस्य सङ्ग्रहेपि सप्रकारकबोधस्यासंग्रहादिति । तन्न, तथासति सत्यत्ववादिमतरीत्या तादृशबोधाप्रसिद्ध्या साध्याप्रसिद्धेः; निष्प्रकारकबोधस्य तैरनुपगमात् । सप्रकारकबोधस्य च विशिष्टपरत्वशून्यतद्वाक्यतात्पर्यविषयत्वाभावात् । अन्यथा सत्यत्वोपहितचिति बाधापत्तेर्दुर्वारत्वात् । नच चिद्भिन्नत्वस्य पक्षतावच्छेदककोटिप्रविष्टत्वेन नोक्तसत्यत्वोपहिताचितस्तादृशपक्षतावच्छेदकाक्रान्तत्वमिति वाच्यम्;–शुद्धचिति बाधवारणायोपात्तस्य चिद्भिन्नत्वस्य शुद्धचिद्भेदरूपत्वेन

सत्यत्वोपहितचितस्तादृशपक्षतावच्छेदकाक्रान्तत्वानपायात्। शुद्धोपहितयोर्भेदस्य भवत्सिद्धान्तसिद्धत्वात्। नच मिथ्यात्ववद्भेदोपहितचिति मिथ्यात्वरूपसाध्याभावेन बाधवारणायोपहितानुपहितसाधारणचिद्भेदस्यैव पक्षतावच्छेदकत्वान्नोक्तबाध इति वाच्यम्;—तथापि सत्यं सर्वं वाच्यमिति वाक्यात् सति तात्पर्ये व्यावहारिकसत्यत्वोपलक्षितघटादिस्वरूपविषयकनिर्विकल्पकबोधस्य गन्धवती पृथिवीत्यादिवाक्याद्गन्धाद्युपलक्षितस्वरूपविषयकनिर्विकल्पकबोधस्येव दुर्निवारतया तादृशबोधस्य च भवदुक्तरीत्या लक्षणाग्रहाजन्यत्वेन तादृशबोधीयमुख्यविशेष्यतानिष्ठनिरवच्छिन्नावच्छेदकताकभेदस्य प्रपञ्चेऽभावेन बाधापत्तेर्दुर्वारत्वात्। नच ब्रह्मान्यविषयकत्वनिष्प्रकारकत्वोभयाभाववत्त्वं तादृशवाक्यजन्यबोधे निवेश्यते, तथाच तादृशवाक्यजन्यस्य व्यावहारिकसत्यत्वोपलक्षितघटादिविषयकबोधस्य निरुक्तोभयाभाववत्त्वविशेषणेन व्यावृत्त्या नोक्तबाध इति वाच्यम्; एवमपि सत्यं सर्वं वाच्यमित्याकारकज्ञानविषयताव्यक्तेर्भावरूपत्वात् ब्रह्मणश्च भावरूपधर्मानाधारत्वात्तद्भेदघटितलक्षणस्य ब्रह्मणि सत्त्वेपि यथा सत्यत्वोपपत्तिस्तद्वत्प्रपंचस्यापि सत्यत्वोपपत्त्या अर्थान्तरस्य दुर्वारत्वात्। नच भामतीकारस्य वाचस्पतेर्मते शुद्धस्य वृत्तिविषयत्वानंगीकारेपि विवरणकारमते शुद्धेप्यज्ञाननिवर्तकवृत्तिविषयत्वांगीकारात्तन्मताभिप्रायेणोक्तलक्षणस्य व्याख्यानान्नानुपपत्तिरिति वाच्यम्;—शुद्धस्य भावरूपधर्मानाश्रयत्वपक्षमवलम्ब्याप्यस्य लक्षणस्य लघुचन्द्रिकादिषु व्याख्यातत्वेनोक्तरीत्या सद्भेदानिवेशने पूर्वोत्तरसन्दर्भाशुद्धेर्दुर्वारत्वात्। लघुचन्द्रिकायां हि "ब्रह्मणो निर्धर्मकत्वात् सत्त्वासत्त्वरूपधर्मद्वयशून्यत्वेन मिथ्यात्वापत्ति" रित्याशङ्क्य, "ब्रह्मणो भावरूपधर्मानाश्रयत्वेपि सत्त्वस्य स्वप्रकारकधीविशेष्यताव्यापकीभूताभावप्रतियोगित्वाभावरूपत्वेन तादृशाभावरूपधर्माश्रयत्वे विरोधाभावादुक्तातिव्याप्तिविरहात्, अभावस्य चाधिकरणीभूतब्रह्मस्वरूपत्वेन स्वभिन्नधर्मशून्यत्वरूपनिर्विशेषत्वकुण्ठकत्वाभावा" दिति परिहारस्य कृतत्वात्। नच मिथ्याभूतं सर्वं

दृश्यमिति स्वाभ्युपगतप्रतीतिविषयत्वाभावः स्वमते ब्रह्मणि परगते तु प्रपञ्चे ऽप्यस्तीति तद्वद्भेदघटितलक्षणे तात्पर्यान्नोक्तार्थान्तरमिति वाच्यम्;-तादृशप्रतीतिविषयत्वाभावस्य तुच्छसाधारणतया तदवच्छिन्नभेदघटित लक्षणस्य तुच्छेऽनतिप्रसङ्गेन असद्वैलक्षण्यांशवैयर्थ्यात् । तादृशाभावे असद्भिन्नत्ववैशिष्ट्यं निवेश्य तत्सार्थक्योपपादनस्य प्रक्षाळनाद्धीति न्यायेनायुक्तत्वात् । नच सद्भिन्नं सर्वमात्मभिन्नमित्याकारकवृत्तिविशेषविषयत्वस्य तुच्छसाधारणस्याभावः स्वमते ब्रह्मण्येव, सत्यत्ववादिमते प्रपञ्चेपीति तद्भेदघटितलक्षणे न कोपि दोष इति वाच्यम्;—तादृशवृत्तेर्विकल्परूपत्वे प्रपञ्चभानस्य स्वमतेपि तत्रासम्भवेन तद्विषयत्वाभावस्य प्रपञ्चसाधारणतया बाधप्रसङ्गात् । तस्यां धीरूपत्वे तद्विषयत्वाभावस्य तुच्छेपि सत्वेन असद्वैलक्षण्यांशवैयर्थ्यात् । नच तृतीयैव काचिदन्तःकरणवृत्तिरुपेयते, यत्र प्रपञ्चतुच्छयोरुभयोरपि विषयतेति वाच्यम्;—सद्भिन्नं सर्वमात्मभिन्नमिति ज्ञानविषयत्वाभाववद्भेदस्य तादृशविषयत्वे पर्यवसानेन सिद्धसाधनात्; तादृशभ्रमविषयत्वस्य प्रपञ्चे अस्माभिरप्यङ्गीकारात्; प्रमात्वस्य चोभयानुमतस्यैकस्याभावेन प्रमाविषयत्वाभावनिवेशासम्भवात् ।

यत्तु ब्रह्मणि भावरूपधर्माङ्गीकारपक्ष एवोक्तविषयतावद्भेदत्वेन सद्भेदनिवेशः, तदनङ्गीकारे तु सत्त्वसम्बन्धवत्प्रतियोगिकतादात्म्यवद्भेदत्वेनैव, नतादृशतादात्म्यस्य भेदप्रतियोगितावच्छेदकत्वं तादृशतादात्म्यत्वेन, सिद्धान्ते तादृशतादात्म्यस्य ब्रह्ममात्रनिष्ठत्वेन तद्व्यक्तित्वेनैवावच्छेदकत्वसम्भवेनोक्तगुरुरूपेण तदयोगात्, तद्व्यक्तित्वेनावच्छेदकतया निवेशे च सिद्धसाधनात्, अतस्तादात्म्यत्वव्यापकविषयताकधीरूपेण, तादृशधियश्च तद्व्यक्तित्वेन प्रवेश इति । तत्तु पूर्वमेव निरस्तम् ।

एतेन सत्यं सर्वं वाच्यमिति वाक्यजन्यबोधस्य निरुक्तमुख्यविशेष्यतासम्बन्धावच्छिन्नाभाव एव सद्वैलक्षण्यमिति पक्षोपि निरस्तः, तादृश बोधस्यासार्वकालिकत्वेन विषयतासम्बन्धावच्छिन्नतदभावस्य सत्यत्ववादिमतेपि कदाचित्सम्भवेन सिद्धसाधनापत्तेः । नच निरवच्छिन्नविशेषणता

सम्बन्धेन तादृशाभावस्य साध्यघटकत्वान्न सिद्धसाधनतेति वाच्यम्, तथापि तादृशविषयतासम्बन्धस्य वृत्त्यनियामकत्वेन तत्सम्बन्धावच्छिन्नाभावाप्रसिद्ध्या साध्याप्रसिद्ध्यापत्तेः । वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वांगीकारेपि विषयताया विषयतात्वेन सम्बन्धतायाः प्रामाणिकत्वेपि विशेष्यताप्रकारताभिन्नविषयतात्वेन सम्बन्धताया अप्रामाणिकतया तादृशाभावाप्रसिद्ध्या साध्याप्रसिद्धिर्दुर्वारेति दिक् ।

(यत्तु साध्यघटकमसद्विलक्षणत्वमपि सत्त्वेन प्रतीयमानत्वम् ; तच्च सत्तादात्म्यतद्वदन्यतरत्वम्, तेनाळीके नातिव्याप्तिः, नवा सत्तादात्म्ये बाधः; नचैवं सत्प्रतियोगिकत्वविशिष्टतादात्म्यस्य ब्रह्मण्यसम्भवात् ब्रह्म वारणस्य तेनैव सम्भवेन सत्त्वाभावोपादानं व्यर्थमिति वाच्यम्,—परमते घटाद्यात्मकसत्प्रतियोगिकत्वविशिष्टतादात्म्यस्य सद्रूपघटत्वादौ सम्भवेन सिद्धसाधनात् ; विजातीयव्यावृत्त्यसम्भवेन लक्षणत्वालाभाच्चेति । तन्न, त्वदभिमततादात्म्यस्यैव परमतासिद्धत्वेन सिद्धसाधनानवकाशात् । अतिव्याप्तिवारकत्वेन लक्षणे सत्त्वाभाववैयर्थ्यस्य दुर्वारत्वाच्च । विजातीयेत्यप्यसत्, सत्प्रतियोगिकत्वविशिष्टतादात्म्यस्यैव विजातीयव्यावर्तकत्वसम्भवात् ।

यदपि गुर्व्यामुक्तं—सत्वेन प्रतीयमानत्वं च स्वरूपसम्बन्धेन या सत्तादात्म्यप्रकारता तन्निरूपितविशेष्यत्वम्, अस्ति च तादात्म्ये तादात्म्यवति दृश्ये च स्वरूपसम्बन्धेन या सत्तादात्म्यप्रकारता तन्निरूपितविशेष्यता, सत्प्रतियोगिकत्वविशिष्टतादात्म्यवत्सदिति प्रतीत्यभावेपि वस्तुगत्या सतो यत्तादात्म्यं तद्वत्सदिति प्रतीतेस्तादृशविशेष्यत्वस्य ब्रह्मणि सत्त्वात्तद्वारणाय सत्वाभावनिवेशनमिति । तन्न, स्वरूपेण सत्तादात्म्यवत्त्वस्यैव तथात्वसम्भवेनोक्तविशेष्यतापर्यंतनिवेशनस्य गुरुत्वात् । सत्तादात्म्येपि तेन सम्बन्धेन तत्सत्त्वात् । अन्यथा तादृशविशेष्यत्वस्याप्ययोगात् । भ्रममादाय तदुपपादनस्यासत्यपि सम्भवादिति ।)

सदसद्विलक्षणत्वरूपमिथ्यात्वभङ्गो द्वितीयः ॥२॥

——(*)——

## प्रतिपन्नोपाधावित्यादिमिथ्यात्वभङ्गः ।

———(*)———

यदपि " नेह नाने " ति श्रुत्यर्थे विवदमानं प्रति साध्यान्तरमुक्तं-प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम् , पारमार्थिकत्वाकारेणोक्तनिषेध प्रतियोगित्वं वा मिथ्यात्वम् ; प्रतिपन्नोपाधौ- स्वप्रकारकधीविशेष्ये सर्वत्र धर्मिणि, त्रैकालिकस्य- सर्वदा विद्यमानस्य, अत्यन्ताभावस्य प्रतियोगित्वं मिथ्यात्वमित्यर्थः । येन सम्बन्धेन यद्रूपविशिष्टसम्बन्धितया यद्यज्ज्ञातं तत्सम्बन्धतद्रूपावच्छिन्नं तन्निष्ठोत्काभावस्य प्रतियोगित्वं निवेश्यम् , अन्यथा सम्बन्धान्तररूपान्तरावच्छिन्नमुक्तप्रतियोगित्वमादाय सिद्धसाधनापत्तेः; तथाच स्वनिष्ठप्रकारताविशिष्टप्रतियोगितावत्त्वं मिथ्यात्वमिति फलितम् । प्रतियोगितायां प्रकारतावैशिष्ट्यं च स्वावच्छेदकधर्मसम्बन्धोभयावच्छिन्नत्व- स्वविशिष्टाभावीयत्वोभयसम्बन्धेन । अभावे स्ववैशिष्ट्यं च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन। स्वाधिकरणता स्वावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धावच्छिन्ना, नतु स्वनिरूपितविशेष्यतासम्बन्धावच्छिन्ना, तथा निवेशे रजतशून्यशुक्त्यादिनिष्ठविशेष्यतानिरूपितरजतनिष्ठयत्किंचित्प्रकारतामादाय सिद्धसाधनापत्तेः । भेदप्रतियोगितावच्छेदकता च स्वरूपसम्बन्धावच्छिन्ना । अत्र च स्वपदं विशेषानुमाने रजतत्वविशिष्टपरम्, विमतं मिथ्या दृश्यत्वादित्यनेन विशेषपक्षकानुमानस्य सामान्यपक्षकानुमानस्य च विवक्षितत्वात् । 'वियन्मिथ्या नवा पृथिवी मिथ्या नवेति प्रत्येकं वा विप्रतिपत्ति' रित्यादिना विशेषपाक्षिकायाः ब्रह्मप्रमातिरिक्तेत्यादिना सामान्यपाक्षिकाया अपि विप्रतिपत्तेरद्वैतसिद्ध्यादौ प्रदर्शितत्वात् । तत्र रजतत्वविशिष्टं तादात्म्यसम्बन्धावच्छिन्नरजतत्वावच्छिन्नप्रकारताविशिष्ट प्रतियोगिताश्रयः दृश्यत्वाद्घटवदिति विशेषानुमानम् , रजतत्वेन घटो नास्तीति प्रतीतिसिद्धाभावमादाय घटे साध्यस्य प्रसिद्धत्वात् । ब्रह्मप्रमाबाध्य

त्वविशिष्टसत्तादात्म्यविशिष्टचिद्भिन्नत्वसमानाधिकरणरूपं तादात्म्यसम्बन्धाव च्छिन्नस्वावच्छिन्नप्रकारताविशिष्टप्रातियोगितासमानाधिकरणं तादृशचिद्भिन्न त्वं वा तादृशप्रतियोगितावच्छेदकं दृश्यवृत्तित्वाच्छुक्तिरूप्यत्ववदिति सा-मान्यानुमानं च। प्राचां मते स्वत्वस्यानुगतत्वेन तत्पक्षमवलम्ब्य सामान्यामु मानकथनाद्दृष्टान्ते शुक्तिरूप्यत्वे स्वपदेन तदेवोपादाय साध्यनिर्वाहः, पक्षे च घटत्वादिकं चिद्भिन्नत्वं वा स्वपदेनोपादाय साध्यमुपपादनीयमिति। एवं पारमार्थिकत्वावच्छिन्नतादृशप्रतियोगित्वं मिथ्यात्वमिति कल्पेपि स्व निष्ठप्रकारताविशिष्टप्रातियोगित्वमेव मिथ्यात्वम्। प्रकारतावैशिष्ट्यं च स्वा वच्छेदकसम्बन्धावच्छिन्नत्व स्वावच्छेदकधर्मसमानाधिकरणत्व- स्वविशिष्टा-भावीयत्वैतत्त्रितयसम्बन्धेन। अभावे स्ववैशिष्ट्यं पूर्वोक्तसम्बन्धेनैव। अत्रापि प्रातिभासिकव्यावहारिकसाधारणघटत्वावच्छिन्नं सर्वं तादात्म्यसम्बन्धावच्छि न्नघटत्वावच्छिन्नप्रकारताविशिष्टप्रतियोगितावत् दृश्यत्वात् प्रातीतिकघट वत् इति विशेषानुमानम्, व्यावहारिकघटमात्रवृत्तिघटत्वावच्छिन्नं तु न पक्षः, तादृशघटत्वसमानाधिकरणतादृशप्रतियोगितायाः प्रातीतिकघटेसत्वेनैतदनु मानात्प्राक्साध्याप्रसिद्ध्यापत्तेः। ब्रह्मप्रमेत्यादिविशेषणत्रयाविशिष्टं रूपं तादात्म्यसम्बन्धावच्छिन्नस्वावच्छिन्नप्रकारताविशिष्टपारमार्थिकत्वावच्छिन्न प्रतियोगितासमानाधिकरणं दृश्यवृत्तित्वाच्छुक्तिरूप्यत्ववदिति सामान्यानु मानं च बोध्यम्। अत्र च प्रतियोगितायां प्रकारतावच्छेदकसम्बन्धावच्छि न्नत्वानुपादाने कपालादौ संयोगादिसम्बन्धेन घटादेर्योऽत्यन्ताभावः तत्प्रति योगित्वस्य घटादौ सिद्धिमादाय घटादेः पारमार्थिकत्वस्वीकारेप्यर्थान्तरं स्यात्; अतस्तन्निवेशः। नच पारमार्थिकत्वस्य घटादौ स्वीकारे तेन रूपेण कथं कपालादौ संयोगेनापि घटादेरभावसिद्धिः? व्यधिकरणधर्मावच्छिन्नाभाववा-दिनापि विशेषरूपेण सामान्याभावस्वीकारेपि सामान्यरूपेण विशेषाभावा स्वीकारादिति वाच्यम्;- प्रकृतानुमानबलेनैव तादृशाभावसिद्ध्योक्तार्थान्तर स्यापत्तेः। एवं तादृशप्रतियोगितायां प्रकारतावच्छेदकरूपसामानाधिकरण्या

निवेशे घटादेः पारमार्थिकत्वेपि पारमार्थिकत्वेन शुक्तिरूप्यादेर्या ऽभावस्ता दृशाभावमादायार्थान्तरं स्यादित्यतस्तन्निवेश इति ।

तन्न;-धीपदेन वृत्त्युपरक्तस्याविद्योपहितस्य वा चैतन्यस्योपादाने अवच्छेद्यावच्छेदकभावापन्नचित्तादात्म्ययोरेव प्रकारताविशेष्यतारूपत्वात् स्वनिष्ठचित्तादात्म्यावच्छेदकाचित्तादात्म्यव्यापकाभावप्रतियोगित्वे पर्यवसानात् किंचिदवच्छिन्नचिदध्यस्ते घटादौ लक्षणसमन्वयेपि शुद्धचिदध्यस्ताविद्याया मव्याप्तिः । स्वनिष्ठचित्तादात्म्यावच्छेदकचित्तादात्म्यवतो ऽप्रसिद्धेः । नच शुद्धचिति अविद्याया अध्यासेप्यविद्याविशिष्टे अहंकाराध्यासस्य पंचपादादौ सिद्धान्तबिन्दौ चोक्तत्वादहमज्ञ इति परस्पराध्यासादज्ञानचित्सम्बन्धावच्छेदकोहंकारचित्सम्बन्धः, स्वकार्यचित्सम्बन्धस्यापि स्वचित्सम्बन्धावच्छेदकत्वादिति वाच्यम्;- तथा सत्येकचित्यज्ञानाहंकारयोस्सम्बन्धादहमज्ञ इति धीर्नत्वहङ्कारविशिष्टेऽज्ञानसम्बन्धादिति विवरणविरोधापत्तेः । यदि च धीपदेन वृत्तिर्गृह्यते, तत्र च विशेष्यताप्रकारते भासमानवैशिष्ट्यप्रतियोगित्वानुयोगित्वरूपे । तथा च स्वप्रतियोगिकत्वेन भासमानवैशिष्ट्यानुयोगिताव्यापकाभावप्रतियोगित्वमर्थ इति नाविद्यायामव्याप्तिः, अविद्यातादात्म्यानुयोगित्वस्य शुद्धचिति सत्वादित्युच्यते ; तदापि संसर्गाविषयकानिर्विकल्पकमात्रविषयीभूते सोयं ककार इति वाक्यजन्यभ्रमविषयप्रातिभासिके नायं स इति ज्ञानबोध्येऽव्याप्तिः, सोयं देवदत्त इति वाक्यादिवोक्तवाक्यादपि निर्विकल्पकबोधस्य भवदनुमतत्वात् । नचाव्याप्तिः लक्षणस्यैव दूषणं नोक्तसाध्यनिर्वचनस्य, प्रातिभासिकसामान्यस्य पक्षवहिर्भूतत्वेनोक्तप्रातिभासिके बाधानवतारादिति वाच्यम्;- प्रतिपन्नोपाधावित्यादेस्सकलमिथ्यासाधारणलक्षणरूपत्वस्यापि भवद्भिः प्रपञ्चितत्वात् । साध्यनिर्वचनरूपत्वेपि तादृशप्रातिभासिके निरुक्तसाध्याभाववति दृश्यत्वहेतोर्व्यभिचारस्य दुर्वारत्वाच्च । सर्वं सदित्यादिज्ञाने सर्वत्वेन तादृशप्रातिभासि

कस्यापि प्रकारत्वोपगमेनोक्ताऽव्याप्तिपरिहारेऽप्यत्र लक्षणे त्रैकालिकत्वनिवेशनं व्यर्थम्, अव्याप्यवृत्त्यत्यन्ताभावस्य स्वप्रकारकधीविशेष्यतासमानाधिकरणाभावाप्रतियोगित्वरूपव्यापकत्वाभावादेव वारणेनाऽव्याप्यवृत्त्यत्यन्ताभावमादायार्थान्तरानवकाशात्; भेदघटितव्यापकतानिवेशमङ्गीकृत्याऽव्याप्यवृत्त्यभावमादाय दोषं सम्पाद्य तद्वारकविशेषणोपादानस्य प्रक्षाळनाद्धीति न्यायेनायुक्तत्वात्। नचास्मन्मते सर्वस्यापि सर्वत्र विद्यमानाभावप्रतियोगित्वेनात्यन्ताभावघटितव्यापकत्वासम्भावात् भेदघटितमेव तदुपादेयमिति त्रैकालिकत्वनिवेशनं सार्थकमिति वाच्यम्;— समानाधिकरणप्रतीतिस्थले सर्वत्र भेदाभेदोभयवादिनां भवतामत्यन्ताभावघटितस्येव भेदघटितस्यापि व्यापकत्वस्य दुर्वचत्वात्। रजतत्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वाधिकरणं रजतत्वावच्छिन्नाभाववदिति समानाधिकरणप्रतीतिसत्त्वेन तत्र तादृशाभाववद्भेदस्याप्यावश्यकत्वात्, अन्यथा गुणादिकं गुण्यादिना भिन्नाभिन्नं समानाधिकृतत्वादित्यनुमाने समानाधिकृतत्वरूपहेतोर्व्यभिचारापत्तेः। नचायं भेद औपाधिक इति व्यापकताघटकभेदेनौपाधिकत्वनिवेशान्न व्यापकत्वाप्रसिद्धिरिति वाच्यम्;- भवन्मते औपाधिकत्वस्य मिथ्यात्वेनौपाधिकत्वाभावरूपानौपाधिकत्वस्यौपाधिकभेदेऽपि सम्भवात्, अयं भेद औपाधिक इति समानाधिकरणप्रतीतिसत्वेनौपाधिकत्वावच्छिन्नभेदरूपस्याप्यनौपाधिकत्वस्य तादृशभेदसम्भवात्। मिथ्यात्वघटकाभावस्य पारमार्थिकतापक्षेऽत्यन्ताभावघटितव्यापकत्वस्यैव सम्भवात्। मिथ्यात्वघटकाभावस्य व्यावहारिकत्वेऽपि तादृशाभावस्य सर्वत्र सत्त्वेऽपि लोकसिद्धाभावीयविशेषणतानामन्यतमत्वेन व्यापकताघटकाभावसम्बन्धतया निवेशं सम्पाद्यात्यन्ताभावघटितव्यापकतानिर्वचनस्य भवद्भिः स्वमते समर्थितत्वेन तादृशव्यापकत्वानिवेशस्य निर्दुष्टत्वाच्च। नच मिथ्यात्वघटकाभावस्य पारमार्थिकताकल्पेऽपि शुक्तिरूप्ये व्यावहारिकाभावघटितमिथ्यात्वस्यैव वक्तव्यतया तत्राव्याप्तिरित्यत्यन्ताभावघटितव्यापकतानिवेशनं न सम्भवति, एवं स्वाश्रमार्थस्य स्वाश्रनिषेधेन बाध

दर्शनेन तत्र प्रातिभासिकाभावघटितस्यैव तस्य वक्तव्यतया तत्राप्य व्याप्तिरिति वाच्यम् ,- भेदघटितव्यापकतापक्षमालम्ब्य त्रैकालिकत्वनिवेशे तत्रोभयत्राव्याप्तिध्रौव्यात् , व्यावहारिकाभावादौ निरुक्तत्रैकालिकत्वाभावात् ।

यत्तु- त्रैकालिकत्वं कालत्रयसम्बन्धित्वं- कालत्वव्यापकत्वपर्यवसितम् , तच्च व्यावहारिकेप्यभावे नानुपपन्नम् , मुक्तौ कालानभ्युपगमेन कालत्वव्यापकतायास्तत्राक्षतेरिति । तन्न;– निरुक्तत्रैकालिकत्वस्याव्याप्यवृत्त्यभावसाधारण्येन तादृशाभावमादायोक्तार्थान्तरावारकत्वेन अव्यावर्तकत्वापत्तेः । स्वाप्नगजादावव्याप्तेश्चावारणात् , तत्र स्वाप्नतदभावघटित मिथ्यात्वस्योपपादनीयत्वेन तादृशाभावे निरुक्तत्रैकालिकत्वाभावात् । यदि च त्रैकालिकपदं निरवच्छिन्नविशेषणतासम्बन्धघटितव्यापकतालाभाय, तथा चोक्तार्थान्तरवारणं,अव्याप्यवृत्त्यभावस्य तादृशसम्बन्धेन व्यापकत्वाभावात् ; स्वाप्नगजादावपि नाव्याप्तिः, तत्र तादृशगजाभावे उक्तव्यापकत्वसत्त्वादित्युच्यते; तदापि भावस्य निरवच्छिन्नविशेषणतासम्बन्धेन वृत्तेरप्रामाणिकत्वेन तेन सम्बन्धेन घटादिमद्भेदस्य प्रतियोग्यप्रसिद्ध्याऽप्रसिद्धत्वेन घटादेर्घटाभावप्रकारतानिरूपितनिरुक्तव्यापकताश्रयतादृशाभावप्रतियोगित्वेऽपि यथा न मिथ्यात्वं तद्वदेव प्रपञ्चस्यामिथ्यात्वापत्त्यार्थान्तरस्य दुर्वारत्वात् । नच स्वप्रकारकधीविशेष्यतासमानाधिकरणभेदप्रतियोगितानिरूपित निरवच्छिन्नविशेषणतासम्बन्धावच्छिन्नावच्छेदकताशून्यत्वे सति निरवच्छिन्न विशेषणतासम्बन्धेन वृत्तित्वमेव तादृशव्यापकत्वम् , घटादेश्चोक्तसम्बन्धेन वृत्तित्वाभावान्नोक्तदोष इति वाच्यम् ; तथासति स्वाप्नगजाभावेऽव्याप्त्यापत्तेः, तत्र स्वाप्नगजात्मकाभावमादाय मिथ्यात्वस्य भवद्भिरुपपादनात । एवं निषेधपदस्यात्यन्ताभावपरतया व्याख्यानमपि न युक्तम्, भेदप्रतियोगितायाः भेदसहिष्णुतादात्म्यावच्छिन्नत्वाभावात् । भेदासहिष्णुतादात्म्यस्य च भवद्भिरनङ्गीकारात् तादृशप्रतियोगितामादायार्थान्तरानवकाशात ।

यत्तु- तादृशभेदप्रतियोगिताया अप्रसिद्धत्वेपि प्रकृतानुमानेनैव भेद निरूपिततादात्म्यसम्बन्धावच्छिन्नप्रतियोगितासिद्धिमादायार्थान्तरवारणायात्यन्ताभावत्वनिवेशनमावश्यकमिति । तन्न;- तेन सम्बन्धेन तदधिकरणे तत्सम्बन्धावच्छिन्नतदभावस्यैव मिथ्यात्वरूपत्वेनात्यन्ताभावत्वानिवेशेपि समीहितसिद्ध्या अर्थान्तरानवकाशात्; अत्यन्ताभावत्वघटितमेव मिथ्यात्वमिति निर्बन्धाभावात् । तथा सति संसर्गाभावपरतया तादृशपदस्य व्याख्यानान्तरासाङ्गत्यापत्तेः, संसर्गाभावो वा निवेश्य इत्यनेन तादृशपक्षस्यापि भवद्भिरवलम्बनात् । एवं संसर्गाभावनिवेशपक्षे ध्वंसप्रतियोगितामादायार्थान्तरापत्तिश्च भवतां दुर्वारा स्यात् ।

यत्तु- ध्वंसस्य त्रैकालिकत्वाद्यभावाद्वारणमिति । तन्न,- प्रकृतानुमानबलेनैव त्रैकालिकत्वादिविशिष्टध्वंसादिप्रतियोगितासिद्ध्यापत्तेः (वस्तुतस्तु भेदासहिष्णुतादात्म्यमवश्यमङ्गीकार्यम्, अत्यन्ताभेदे घटो घट इत्यादि शब्दाभावेपि तथाविधप्रत्यक्षाद्युत्पत्तौ बाधकाभावात् । अतएव निर्वह्निर्वह्निमानित्यत्र वह्न्यभाववन्निर्वह्नेः, वह्निमान् निर्वह्निरित्यत्र वह्निमद्वह्निनतश्च दोषत्वं गदाधरप्रभृतिभिरुपगम्यते । नह्यज्ञायमानस्य दोषत्वमुपपद्यते । नापि निर्वह्नौ निर्वह्नित्वप्रकारकमेव ज्ञानम्, नतु तादात्म्येन निर्वह्न्यादिप्रकारकमिति विनिगन्तुं शक्यते; निर्वह्नौ निर्वह्निव्याप्यवत्तापरामर्शान्निर्वह्निविधेयकानुमितेर्दुर्वारत्वाच्च । किंच व्यधिकरणसम्बन्धेन घटत्वादिविशिष्टसम्बन्धितया यद्यज्ज्ञायते तन्निष्ठात्यन्ताभावीयोक्तसम्बन्धावच्छिन्नप्रतियोगितामादायार्थान्तरवारणाय येन येन सम्बन्धेनेत्यवश्यं वाच्यतया संयोगादिना घटादिसम्बन्धितया ज्ञायमाने संयोगादिना घटादिनिषेधसिद्धेरावश्यकतया भेदमात्रसिद्ध्या अर्थान्तरानवकाशात् । एवं विरुद्धघटत्वपटत्वोभयावच्छिन्नात्यन्ताभावप्रतियोगित्वमादाय तद्दोषवारणाय यद्यद्रूपविशिष्टेत्यस्यापि विवक्षणीयतया सत्त्वादिविशिष्टसम्बन्धितया ज्ञायमाने सर्वत्र सत्त्वाद्यवच्छिन्नभेदसिद्धावप्युद्देश्यसिद्धेरत्यन्ताभावत्वनिवेशेन

न किंचित्प्रयोजनमिति बोध्यम् । किंच भेदध्वंसादेः स्वसाधारण स्वप्रकारकधीविशेष्यतां प्रति व्यापकत्वाभावादेव वारणात् तद्वारणायोक्त मत्यन्ताभावत्वमफलमेवेति बोध्यम् । एवं प्रतियोगितायां सम्बन्धविशेषा वच्छिन्नत्वनिवेशनमयुक्तम् , दृष्टान्ते साध्यवैकल्यापत्तेः, विशेषानुमाने व्य धिकरणधर्मावच्छिन्नाभावप्रतियोगितामादाय घटादेः दृष्टान्तीकृतत्वात् ; तादृशप्रतियोगितायाश्च सम्बन्धानवच्छिन्नत्वात्।नच घटत्वादिविशिष्टपटाद्यव गाहिज्ञान- घटत्वादिनापटाद्यभावावगाहिज्ञानयोः प्रतिबध्यप्रतिबन्धकभाव सत्वात्तादृशप्रतिबध्यप्रतिबन्धकभावस्य च सम्बन्धविशेषनियन्त्रितत्वानु रोधेन व्यधिकरणधर्मावच्छिन्नप्रतियोगितायामपि सम्बन्धावच्छिन्नत्वमाव- श्यकम् , व्यधिकरणधर्मावच्छिन्नाभावज्ञानस्य व्यधिकरणधर्मप्रकारेण त द्वत्ताज्ञानविरोधित्वं च दीधितिकारानुमतम् , तेन बाधग्रन्थे लाघवोपनीत कांचनमयत्वादिना वह्न्याद्यनुमितिविरोधितया कांचनमयत्वावच्छिन्नवह्न्य भावस्य हेत्वाभासत्वोक्तेरिति वाच्यम्;- उक्तयुक्त्या व्यधिकरणधर्मावच्छिन्न प्रतियोगितायास्सम्बन्धावच्छिन्नत्वस्य गदाधरादिभिः व्यवस्थापितत्वेपि तादृशयुक्तेः भवत्सिद्धान्तविरुद्धत्वात् । भवत्सिद्धान्ते घटत्वविशिष्टपटवानिति ज्ञानं कांचनमयवह्निमानिति ज्ञानंच प्रातिभासिकविषयकम् , अन्यथाख्याते र्भवद्भिरनङ्गीकारात् , तादृशप्रातिभासिकविषयकज्ञानयोश्च तादृशप्रातिभासिका भावविषयकज्ञानस्यैव विरोधित्वं युक्तम् , नोक्तव्यधिकरणधर्मावच्छिन्ना भावज्ञानस्येति ।

नच घटत्वपटत्वोभयावच्छिन्नप्रकारताशालिबुद्धिं प्रति घटत्वावच्छिन्न पटनिष्ठप्रतियोगिताकाभावज्ञानत्वेन प्रतिबन्धकतया व्यधिकरणधर्माव- च्छिन्नाभावज्ञानस्याप्युक्तप्रतिबन्धकतावच्छेदकरूपाक्रान्तत्वेन प्रतिबन्धकत्वं दुर्वारमिति वाच्यम् ;- तथासति घटत्वेन पटवानिति बुद्धौ घटत्वेन पट जलोभयं नास्तीति ज्ञानस्यापि प्रतिबन्धकतापत्तिरिति । तद्वारणाय तदुभया

वच्छिन्नप्रकारताशालिबुद्धौ तदुभयपर्याप्तावच्छेदकप्रतियोगिताकाभावज्ञान-त्वेनैव प्रतिबन्धकत्वस्य वक्तव्यतया व्यधिकरणधर्मावच्छिन्नाभावज्ञान व्यावृत्तेः, घटत्वेन पटाभावस्य घटत्वमात्रावच्छिन्नप्रतियोगिताकत्वात् । नच तादृशव्यधिकरणधर्मावच्छिन्नाभावस्यापि तदुभयावच्छिन्नप्रतियोगिताकत्वमावश्यकम्, अन्यथा तज्ज्ञानस्य प्रतिबन्धकत्वानुपपत्त्या तस्य बाधत्वकथनासङ्गत्यापत्तेः, तथाच तादृशप्रतिबध्यप्रतिबन्धकभावस्य सम्बन्धविशेषनियन्त्रितत्वानुरोधेन तादृशप्रतियोगिताया अपि सम्बन्धावच्छिन्नत्वसिध्या न साध्यवैकल्यमिति वाच्यम् ;- एवमपि साध्यवैकल्यस्य दुर्वारत्वात्, रजतघटोभयाभावमादाय रजतादौ सिद्धसाधनवारणाय प्रकारतावच्छेदकधर्मपर्याप्तावच्छेदकताकत्वस्यैव प्रतियोगितायां निवेशनीयतया रजतत्वेन घटाभावीयप्रतियोगिताव्यावर्तनात्, तादृशप्रतियोगिताया रजतत्वघटत्वोभयावच्छिन्नत्वेन तादृशप्रकारतावच्छेदकीभूतरजतत्वपर्याप्तावच्छेदकताकत्वाभावात् ।

एतेन स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्थाने स्वानवच्छेदकसम्बन्धानवच्छिन्नत्वं निवेश्य पूर्वोक्तसाध्यवैकल्यपरिहारेऽपि न निस्तारः । किञ्च रजतस्य सत्यतामुपगम्य तदाश्रयत्वेन प्रतीयमाने तदवयवे तत्सामान्याभावानुपगमेऽपि उक्तानुमानबलेनैव रजतत्वावच्छिन्नघटानिष्ठप्रतियोगित्वस्य रजते सिध्यापत्त्यार्थान्तरं दुर्वारम् । नच पारमार्थिकत्वावच्छिन्नप्रतियोगिताघटितसाध्ये पारमार्थिकत्वेन शुक्तिरूप्यात्यन्ताभावमादाय दोषवारणाय तद्रूपसामानाधिकरण्यनिवेशवदत्रापि तन्निवेश्यमिति वाच्यम्,- तथासति साध्याप्रसिध्यापत्तेः, रजतत्वेन घटाभावप्रतियोगिताया रजतत्वसामानाधिकरण्यविरहात् । पारमार्थिकत्वावच्छिन्नरजतत्वसमानाधिकरणाभावप्रतियोगितायाः प्रातीतिकरूप्ये प्रसिद्धत्वेन पारमार्थिकत्वघटितसाध्यकल्पे साध्यप्रसिद्धिविरहेण तत्कल्पे तादृशविशेषणोपादानसम्भवात् । रजतत्वा

वच्छिन्नाभावस्य च रजतावयवसाधारणरजतत्वावच्छिन्नप्रकारतानिरूपित विशेष्यताऽव्यापकत्वाभावात् ; तादृशाभावप्रतियोगितामादाय शुक्तिरूप्येपि प्रथमकल्पे साध्यप्रसिद्ध्यसम्भवात् ।

अथात्र रजतत्वेन केवलघटाभावप्रतियोगितायाः रजते असम्भाविततया तादृशप्रतियोगितामादायार्थान्तरानवकाशेन रजतत्वेन रजतघटान्यतराभावप्रतियोगितामादाय रजतत्वेन रजतघटोभयाभावप्रतियोगितामादाय वार्थान्तरं वाच्यम् ;— नाद्यः, सत्यत्ववादिमते रजतावयवे रजतसामान्याभावस्येवोक्तान्यतराभावस्याप्यसत्त्वात् रजतप्रकारकधीविशेष्यताव्यापकत्वाभावात् । तत्र तत्सिद्धौ च रजतस्य सत्यताभङ्गस्य दुर्वारत्वात् । नान्त्यः, निरुक्तप्रतियोगितारूपसाध्ये अव्यासज्यवृत्तित्वविशेषणेन पर्याप्तिस्साध्यतावच्छेदकसम्बन्धत्वोपगमेन वा तादृशोभयाभावमादायार्थान्तरवारणसम्भवादितिचेन्न;- तथाप्युक्तप्रकारद्वयस्य पारमार्थिकत्वघटितसाध्येपि सम्भवेन तत्र सामानाधिकरण्यनिवेशवैयर्थ्यं दुर्वारम् । तत्कल्पेपि पारमार्थिकत्वेन केवलशुक्तिरूप्याभावप्रतियोगित्वस्य घटे असम्भवेन पारमार्थिकत्वेन शुक्तिरूप्यघटान्यतराभावस्य कपालादिसाधारणघटप्रकारतानिरूपितविशेष्यताव्यापकत्वाभावेन व्यासज्यवृत्तिप्रतियोगिताकं केवलान्वयिनं पारमार्थिकत्वेन घटशुक्तिरूप्योभयाभावमादायार्थान्तरस्य वक्तव्यतया निरुक्तोभयाभावप्रतियोगितायां घटत्वसामानाधिकरण्यसत्त्वेन यथाश्रुततद्विशेषणेन वारणायोगात् । पर्याप्तिद्वयगर्भसामानाधिकरण्यं निवेश्य वारणस्य कर्तव्यतया तदपेक्षया पर्याप्तिसम्बन्धेन साध्यताया एव युक्तत्वात् ।

एतेन प्रथमसाध्ये साध्याप्रसिद्धिभयेन सामानाधिकरण्यानिवेशासम्भवात् रजतत्वेन रजतघटोभयाभावमादायार्थान्तरवारणाय रजतत्वावच्छिन्नोक्ताभावप्रतियोगिताशून्यत्वं पक्षे विशेषणं देयम् , पारमार्थिकत्वघटितद्वितीयसाध्येच सामानाधिकरण्यानिवेशेपि प्रातीतिकघटे साध्यप्रसिद्धिसम्भ-

वेन लघुना सामानाधिकरण्यनिवेशेनैव तद्वारणसम्भवादुक्तरीत्यापक्षविशेषणो पादाने गौरवाच्च लघुना सामानाधिकरण्यविशेषणेनैव पारमार्थिकत्वेन शुक्तिरूप्याभावप्रतियोगितामादायार्थान्तरं वारणीयमिति निरस्तम्। उभयत्र पर्याप्ति सम्बन्धेन साध्यत्वाङ्गीकारेणैवार्थान्तरवारणसम्भवे तदर्थं विशेषाणान्तरा पादानानौचित्यात्, प्रथमसाध्ये पक्षे तद्विशेषणोपादाने आश्रयासिद्धेर्दुर्वा रत्वाच्च । रजतत्वेन रजतघटोभयाभावस्य व्यधिकरणधर्मावच्छिन्नाभाव वादिनां मते प्रसिद्धत्वेन भवतां च व्यधिकरणधर्मावच्छिन्नाभावमभ्युप गच्छतां तादृशप्रतियोगिताशून्यत्वस्य रजते असम्भवात् ।

(यत्तु– पारमार्थिकत्वेन घटतद्विरुद्धोभयाभावादेः प्रतियोगिताव च्छेदकविशिष्टप्रतियोगिमतो ऽप्रसिद्ध्या केवलान्वयित्वेन तत्प्रतियोगिता मादाय सिद्धसाधनमित्याशङ्क्य व्यधिकरणसम्बन्धावच्छिन्नाभावमादाय सिद्धसाधनवारणाय येन येन सम्बन्धेनेति वीप्साया आवश्यकत्वेन घटत- द्विरुद्धोभयं पारमार्थिकमिति ज्ञाने विषयतया तदुभयवति तत्सम्ब- न्धावच्छिन्नतदुभयाभावस्यासत्त्वान्न सिद्धसाधनमिति समाहितम्। तन्न;- पारमार्थिकत्वेन घटशशशृङ्गोभयाभावमादाय सिद्धसाधनतादवस्थ्यात् । शशशृङ्गस्यापारमार्थिकतया तदुभयस्य क्वचिदपि पारमार्थिकत्वेनासत्त्वात् । अथ घटशशशृङ्गोभयं पारमार्थिकमिति ज्ञाने तादृशाभावो नास्ति, तथाहि,– यत्र यद्रूपावच्छिन्नयत्सम्बन्धावच्छिन्नयन्निष्ठाधेयतानिरूपकत्वज्ञानं प्रमा तत्र तद्रूपावच्छिन्नतत्सम्बन्धावच्छिन्नतन्निष्ठप्रतियोगिताकाभाववत्ताज्ञानं न प्रमेत्य विवादम्, भूतलादौ संयोगादिसम्बन्धावच्छिन्नघटादिनिष्ठाधेयतानिरूपकत्व ज्ञानस्य प्रमात्वेन तत्र तादृशाभावज्ञानस्य भ्रमत्वदर्शनात्, घटशशशृङ्गोभयं पारमार्थिकमिति ज्ञाने च पारमार्थिकत्वावच्छिन्नविषयितासम्बन्धावच्छिन्न तदुभयनिष्ठाधेयतानिरूपकत्वज्ञानस्य प्रमात्वान्न तत्र तादृशाभावज्ञानं प्रमेति न तत्र तादृशाभावसम्भव इति चेन्न;— आधेयतापर्याप्त्यधिकर णवृत्तिधर्मस्यैवाधेयतावच्छेदकत्वेनोभयावृत्तिपारमार्थिकत्वस्योभयपर्याप्ताधेय-

तावच्छेदकत्वायोगात् , उक्तज्ञानस्य प्रमात्वासम्भवात् । नच विषयता सम्बन्धावच्छिन्नाधेयता विषयतारूपैवेति पारमार्थिकत्वस्याप्युक्ताधेयतावच्छेदकत्वासम्भवः, प्रमानुरोधेन विषयावृत्तिधर्मस्यापि विषयतावच्छेदकत्वावश्यकत्वादिति वाच्यम् ;- परमते घटः पारमार्थिक इति ज्ञाने विषयितया पारमार्थिकत्वविशिष्टघटाभावासत्त्वेन बाधवारणाय प्रातिभासिकान्य पारमार्थिकत्वस्य निवेश्यत्वादिति ।

किञ्च—पारमार्थिकत्वघटितसाध्यकल्पेन्योन्याश्रयः; पारमार्थिकत्वस्य मिथ्यात्वाभावरूपत्वात्। पारमार्थिकत्वस्यापि पारमार्थिकत्वाकारेणैव निषेधस्य वक्तव्यतयानवस्थापत्तिश्च । अन्यथा अरोपितस्य पारमार्थिकत्वस्य प्रपञ्चेप्यभ्युपगतत्वेन तत्र तदभावस्य दुरुपपादत्वात् । येन रूपेण येन सम्बन्धेन च यत्र यत्सम्बध्यते तत्र तत्सम्बन्धावच्छिन्नाभावानङ्गीकारपक्षे व्यधिकरण धर्मावच्छिन्नाभावमादाय साध्योपपत्त्यर्थमुक्तपक्षावलम्बनात् । आरोपित पारमार्थिकत्ववति प्रपञ्चे स्वरूपेण तदभावासम्भवात् ।

यत्तु— पारमार्थिकत्वं प्रकृते न मिथ्यात्वाभावः, किन्तु ज्ञानानिवर्त्त्य मात्रविशेष्यकधीः, तथा च विषयतासम्बन्धेन तदवच्छिन्नस्य प्रतियोगित्वस्य निवेशनान्नान्योन्याश्रयः, पारमार्थिकत्वस्य तद्घटितमिथ्यात्वाघटितत्वात् । नचोक्तधियस्तद्व्यक्तित्वेन निवेशासम्भवः, परार्थानुमाने तदादि सर्वनामशब्देन साध्यनिर्देशस्यासाम्प्रदायिकत्वात् तद्व्यक्तित्वविशिष्टज्ञानापेक्षया लघोर्घटत्वादेरेव विशेष्यतासम्बन्धेन प्रपंचनिष्ठप्रतियोगितायामवच्छेदकत्वात् । नापि तादृशधीत्वेन तस्य तद्व्यक्तित्वाद्यपेक्षया गुरुशरीरत्वेन तेन रूपेण धियः प्रतियोगितावच्छेदकत्वस्य निवेशयितुमशक्यत्वादिति वाच्यम्;— तादृशधीत्वोपलक्षितज्ञाननिष्ठावच्छेदकताया एव निवेशेन तादृशधीत्वस्य गुरुत्वेपि क्षतिविरहात् । नचैवं प्रपंचस्य तादृशपारमार्थिकत्ववत्त्वेपि पूर्वक्षणवृत्तितादृशपारमार्थिकत्वरूपधीव्यक्तिरूपेण तत्तद्घटादेस्तद

धिकरणे अभावसत्त्वेन सिद्धसाधनमिति वाच्यम्;- अनवच्छिन्नोक्तावच्छेदकताया एव निवेशात् स्वरूपतस्तत्तद्धीव्यक्तेरवच्छेदकत्वसम्भवात् । नच प्रपंचस्य मिथ्यात्वसंशयकाले प्रकृतानुमानस्यावतारः, तथा च तत्काले तादृशधियः प्रपंचाविशेष्यकत्वस्य सन्दिग्धतया प्रपंचवति तादृशधीरूपेण प्रपञ्चस्याभावो ज्ञातुमशक्य इति वाच्यम्;- उक्तधीरूपेण प्रपंचवत्त्वं यत्र निर्णीतं तत्रैव तद्रूपेण प्रपंचाभावस्य ज्ञातुमशक्यत्वेन प्रपंचे तादृशधीसंशयप्रयुक्ते तादृशधीरूपेण प्रपंचस्य ब्रह्मणि संशये सत्यपि तद्रूपेण तत्र तस्याभावज्ञाने बाधकाभावाद्ग्राह्यसंशयस्य प्रतिबन्धकत्वपक्षेपि प्रत्यक्षं प्रत्येव तत्स्वीकारादनुमित्यात्मकोक्ताभावज्ञाने तदस्वीकारादिति । तन्न;- प्रपंचसत्यतामतेपि घटपटादिविशेष्यकधीरूपाणां उक्तपारमार्थिकत्वानां भिन्नभिन्नतया चालिनीन्यायेन पटादिविशेष्यकधीरूपपारमार्थिकत्वेन घटाद्यभावमादाय सिद्धसाधनात् । नच तादृशधीत्वव्यापकनिरवच्छिन्नावच्छेदकताकत्वमेव पारमार्थिकत्वावच्छिन्नत्वम्, तथा च घटादेः पटादिविशेष्यकधीरूपयत्किंचित्पारमार्थिकत्वेन अभावमादाय सिद्धसाधनस्य नावकाशः, तदीयप्रतियोगितायाः पारमार्थिकत्वसामान्यानवच्छिन्नत्वेन तादृशधीत्वव्यापकावच्छेदकताकत्वाभावात् , पारमार्थिकत्वसामान्येन घटाद्यभावस्य च सत्यत्ववादिमते असिद्धत्वादिति वाच्यम्;- अवच्छेदकानुगमकरूपाभावे भिन्नभिन्नावच्छेदकव्यक्तीनां स्वरूपत एकावच्छेदकताश्रयत्वासम्भवात् , दण्डादिव्यक्तीनां दण्डत्वादिनानुगतानामेवैकावच्छेदकत्वसम्भवात् । तथा च स्वमतेपि ज्ञानानिवर्त्त्यभूतब्रह्ममात्रविषयकधियामपि बहुत्वेन तादृशधीत्वव्यापकनिरवच्छिन्नावच्छेदकत्वाप्रसिद्ध्या साध्याप्रसिद्ध्यापत्तेः । एवं घटगतपारमार्थिकत्वतदन्यगतपारमार्थिकत्वाभाभ्यां प्रमेयसामान्याभावमादाय सिद्धसाधनं दुर्वारम् । घटादावेकैकपारमार्थिकत्वसत्त्वेपि यावत्पारमार्थिकत्वाभावेन यावत्पारमार्थिकत्वावच्छिन्नप्रतियोगितायास्तादृशधीत्वव्यापकनिरवच्छिन्नावच्छेदकताकत्वस्यापि सम्भवात् । नच यावन्ति

पारमार्थिकत्वानि तत्तदवच्छिन्नस्वप्रकारकधीविशेष्यताव्यापकाभावप्रतियोगित्वकूटवत्त्वस्य साध्यत्वान्नोक्तासिद्धसाधनावसरः, पटादिगतपारमार्थिकत्वेन घटादेरभावस्य प्रसिद्धावपि घटगतपारमार्थिकत्वावच्छिन्नताद्दशप्रतियोगित्वस्यापि कूटान्तर्गतत्वेनतस्य घटादौ सत्यत्ववादिभिरनङ्गीकारात्;-तथा च ताद्दशधीत्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वमेवोक्तसाध्यं पर्यवसितम् । भेदप्रतियोगितावच्छेदकता च (आधेयतासम्बन्धावच्छिन्ना, आधेयता च) स्वनिष्ठताद्दशप्रतियोगितानिरूपितनिरवच्छिन्नावच्छेदकत्वसम्बन्धावच्छिन्नेति वाच्यम्;-एवमपि सविकल्पकधियामेव ज्ञानानिवर्त्यमात्रविशेष्यकधीत्वरूपानुगतरूपाक्रान्ततया निर्विकल्पकस्य च तदनाक्रान्तत्वेनोपहितचैतन्ये बाधापत्तेः ताद्दशधीरूपपारमार्थिकत्वस्योपहितावित्त्येव सम्भवात् ज्ञाननिवर्त्याविषयकत्वरूपं ज्ञानानिवर्त्यमात्रविशेष्यकत्वं निरुच्योक्तरूपस्य स्वमते निर्विकल्पकमात्रवृत्तित्वादुक्तदोषवारणेपि ज्ञानं सर्वं स्वविषयकामिति वादिनां मते ज्ञानमात्रस्य ज्ञाननिवर्त्यस्वविषयकत्वेन ज्ञाननिवर्त्याविषयकधियो प्रसिद्ध्या साध्याप्रसिद्ध्यापत्तेः । नच स्वविषयकत्वस्वभिन्नत्वोभयसम्बन्धावच्छिन्नज्ञाननिवर्त्यनिष्ठप्रतियोगिताकाभावविशिष्टधीत्वेन ताद्दशोभयसम्बन्धावच्छिन्नज्ञाननिवर्त्यनिष्ठावच्छेदकताकप्रतियोगिताकभेदवद्धीत्वेन वा पारमार्थिकत्वपदार्थभूता धियोनुगमय्य ताद्दशधीत्वोपलक्षितनिष्ठनिरवच्छिन्नावच्छेदकताकताद्दशप्रतियोगित्वस्य साध्यत्वाङ्गीकारान्न साध्याप्रसिद्धिरिति वाच्यम् , एवमपि ताद्दशधीरूपपारमार्थिकत्वे निरुक्तपक्षतावच्छेदकाक्रान्ते बाधस्य दुर्वारत्वात् । ताद्दशधीरूपपारमार्थिकत्वस्य स्वस्मिन् विषयतासम्बन्धेन सत्त्वेन तेन रूपेण स्वस्य निषेधासम्भवेन यावन्ति पारमार्थिकत्वानि तावदवच्छिन्नप्रतियोगिताकूटवत्त्वस्य निरुक्तधेयतासम्बन्धेन ताद्दशधीत्वव्यापकत्वपर्यवसितस्य साध्यस्य तत्राभावात् । नच स्वभिन्नताद्दशधीत्वव्यापकत्वमेव साध्यमिति नोक्त बाधः । एकधीरूपपारमार्थिकत्वस्य तदन्यधीरूपपारमार्थिकत्वान्तरेण निषेधमादाय साध्यपर्यवसानसम्भवा

दिति वाच्यम्;- एवंसत्यननुगमापत्तेः । पक्षीभूतघटादिव्यक्तीनामेव स्वपदे नोपादेयत्वात । नच तादृशधीत्वव्यापकत्वमेव साध्यम् । व्यापकताघटक भेदप्रतियोगितावच्छेदकताचाधेयतासम्बन्धावच्छिन्ना, आधेयता च स्वनिष्ठ तादृशप्रतियोगितानिरूपितनिरवच्छिन्नावच्छेदकत्वाभावस्वभिन्नत्वोभयाभाव वत्त्वसम्बन्धावच्छिन्ना, तथाच स्वभिन्नतादृशधीरूपपारमार्थिकत्वे स्वनिष्ठ तादृशप्रतियोगितानिरूपितनिरवच्छिन्नावच्छेदकत्वस्यैव सत्त्वेन तदभावाभा वेन स्वात्मकपारमार्थिकत्वे च स्वभिन्नत्वाभावेनोक्तोभयाभाववत्त्वस्य तादृश धीत्वव्यापकतया तादृशोभयाभाववत्त्वसम्बन्धावच्छिन्नाधेयतासम्बन्धेन व्याप कत्वस्योक्तपारमार्थिकत्वेपि सत्त्वादिति वाच्याम्;— एवमपि तादृशपारमा र्थिकत्वात्मकधियामेकस्या अन्यया तस्या अप्यन्यया तस्या अप्यन्यया निषेधप्रतियोगित्वस्य वाच्यत्वेनानुमितिविषयानवस्थाया दुर्वारत्वात् ।

यत्तु- पारमार्थिकत्वमबाध्यत्वोपलक्षितस्वरूपम् । ऐक्यसम्बन्धेन तन्निष्ठावच्छेदकताकाभावो निवेश्यः । तेनाध्यासिकसम्बन्धेन ब्रह्मात्मकोक्त पारमार्थिकत्वस्य प्रपञ्चसम्बन्धित्वेन स्वरूपावच्छेदकत्वपक्षोक्तदोषः । ऐक्यस्य सिद्धान्तेऽवच्छेदकत्वाभावेपि न क्षतिः । परैस्तदभ्युपगमात् । तद्रीत्या तान्प्रत्युक्तिसम्भवात् । व्यधिकरणस्य धर्मविधयेवासम्बन्धस्यापि सम्बन्धविधया प्रतियोगितायामवच्छेदकत्वसम्भवाच्चेति । तन्न;- पूर्वक्षणा वच्छिन्नोक्तस्वरूपात्मकघटाद्यभावमादाय घटांशे सिद्धसाधनवारणायानव च्छिन्नावच्छेदकताया निवेशनीयतया घटादिस्वरूपस्याखण्डत्वाभावेन घटादे रबाध्यस्वरूपत्वेप्यैक्यसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वसम्भवात्तादृशा भावमादाय घटादौ सिद्धसाधनापत्तेः । नच सखण्डस्यापि स्वरूपस्यानव च्छिन्नावच्छेदकतावत्त्वबाधकाभाव इति गुर्व्यामुक्तं युक्तम् । तथापि सख ण्डघटादेः स्वरूपतोवच्छेदकत्वानुपगन्तृतार्किकादिमते सिद्धसाधनस्य दुर्वा रत्वात् । अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वेपि स्वान्येन तत्तदबाध्य स्वरूपेणावच्छिन्नप्रतियोगिताकाभावमादाय दृश्यमात्रे सिद्धसाधनात् ।

यत्तु– ज्ञानानिवर्त्यत्वमेव पारमार्थिकत्वं, तन्निष्ठविशेषणतासम्बन्धावच्छिन्नावच्छेदकताकतादृशप्रतियोगित्वमेव साध्यम्; अतो नानवस्था, ज्ञानानिवर्त्यत्वरूपेण स्वस्वेतरसकलदृश्यानां निषेधप्रतियोगित्वसम्भवात् तस्याभावीयविशेषणतासम्बन्धेन स्वस्मिन्नप्यसत्त्वात् लाघवात्तदेव निवेश्यत इति । तन्न; ज्ञाननिवर्त्यत्वस्य मिथ्यात्ववादिनां ज्ञाननिवर्त्यः प्रपञ्च इति प्रतीतेर्भेदाभेदनियतत्वं च स्वीकुर्वाणानां भवतां ज्ञाननिवर्त्यत्वाभावस्य ज्ञाननिवर्त्यभेदस्य वा प्रपंचनिष्ठतया तन्निष्ठप्रतियोगितायां व्यधिकरणतयावच्छेदकत्वासम्भवात् । न च प्रतियोग्यनधिकरणवृत्तित्वविशिष्टज्ञाननिवर्त्यत्वाभावस्य प्रपञ्चे ऽभावात्तस्य व्यधिकरणतयावच्छेदकत्वसम्भव इति वाच्यम्; - प्रतियोग्यधिकरणत्वाभावस्य तदवच्छिन्नभेदस्य वा उक्तरीत्या प्रपंचेपि सम्भवेन प्रतियोग्यनधिकरणवृत्तित्वविशिष्टज्ञाननिवर्त्यत्वाभावस्यापि प्रपञ्चे सम्भवात् । पूर्वक्षणवृत्तित्वविशिष्टतदभावनिष्ठावच्छेदकताकप्रतियोगितामादाय सिद्धसाधनवारणाय स्वरूपतोऽवच्छेदकत्वस्यैव निवेशनीयतयोक्ताभावस्य प्रतियोग्यनधिकरणवृत्तित्वविशिष्टतादृशाभावत्वेन व्यधिकरणतयावच्छेदकत्वसम्भवे स्वरूपतस्तदसम्भवाच्च । न च विशिष्टस्यातिरिक्ततामते प्रतियोग्यनधिकरणीभूतब्रह्मवृत्तित्वविशिष्टतादृशाभावस्य प्रपञ्चेऽभावात् स्वरूपत एव व्यधिकरणतयावच्छेदकत्वसम्भव इति वाच्यम्; तथासति घटादिवृत्तित्वविशिष्टतादृशाभावस्य घटादिनिष्ठप्रतियोगितायामप्यवच्छेदकत्वसम्भवेन पूर्वोक्तरीत्या सिद्धसाधनवारणाय तादृशाभावावच्छिन्नप्रतियोगिताकूटवत्त्वस्यैव साध्यकार्यत्वेन बाधतादवस्थ्यात् । किंच पारमार्थिकत्वघटत्वोभाभ्यां पटाद्यभावमादाय सिद्धसाधनं दुष्परिहरम् । पारमार्थिकत्वपर्याप्तावच्छेदकताकतादृशप्रतियोगित्वस्य साध्यत्वे च साध्याप्रसिद्धिः । प्रतियोगिविशेषणतापन्नधर्मस्यापि व्यधिकरणधर्मावच्छिन्नाभावप्रतियोगितावच्छेदकताया गदाधरादिभिर्व्यवस्थापितत्वादिति दिक् ।

यदपि सर्वदेशकालवृत्त्यभावप्रतियोगित्वमेव साध्यं पर्यवसितम्, तथाच प्रपञ्चस्यालीकत्वापत्तिरित्याशङ्क्य कालसम्बन्धित्वसमानाधिकरणस्य

तस्य निवेश्यत्वादिति समाहितम् । तत्र शङ्कैव तावन्नोपपद्यते । तथाहि, अळीकत्वपदेन सर्वदेशकालवृत्त्यभावप्रतियोगित्वमेव विवक्षितम्, किंवा निरुपाख्यत्वम्, अथवा कालासम्बन्धित्वम्, यद्वा अळीकपदवाच्यत्वम्? नाद्यः, आपाद्यापादकयोरभेदप्रसङ्गात् तत्साधयतस्तदापत्तेरिष्टत्वाच्च । न द्वितीयः, त्वन्मते यत्र सर्वदेशकालवृत्त्यभावप्रतियोगित्वं तत्र निरुपाख्यत्वमिति व्याप्त्यभावेन तदापत्तेरयोगात् । न च सर्वानिर्वाच्यस्य पक्षत्वात् पक्षभिन्ने तुच्छे तयोर्व्याप्तिसिद्धिरिति वाच्यम्;– अप्रयोजकत्वात् । अतएव न तृतीयः । नापि चतुर्थः, प्रवृत्तिनिमित्तस्य सत्त्वे वाच्यत्वस्येष्टत्वात् । तदभावे ततएव तदनापत्तेः ।

एतेन तादृशाभावप्रतियोगित्वस्य प्रपञ्चस्य तुच्छत्वेऽप्युपपत्त्या अर्थान्तरमित्याशङ्काभाववर्णनमपि निरस्तम् । पक्षकोटौ सत्तादात्म्यविशेषणसत्त्वेन तेनैव तद्वारणात् । यदपि प्रतिपन्नोपाधावित्यादेः स्वसमानाधिकरणाभावप्रतियोगित्वमर्थः, नचैवं प्रातिभासिकाभावमादाय सिद्धसाधनम्, अभावे स्वान्यूनसत्ताकत्वस्य विशेषणत्वात् । न्यूनसत्ताकत्वं च अभावस्य प्रातिभासिकनिष्ठं यद्व्यावहारिकपारमार्थिकान्यतरप्रतियोगित्वम् । यच्च व्यावहारिकनिष्ठं पारमार्थिकप्रतियोगित्वं तत्, तथाच व्यावहारिकपारमार्थिकान्यतरनिष्ठं यत्प्रातिभासिकाभावप्रतियोगित्वं यच्च पारमार्थिकनिष्ठव्यावहारिकाभावप्रतियोगित्वं तदन्यद्यत्स्वसमानाधिकरणाभावप्रतियोगित्वं तदेव मिथ्यात्वम् । व्यावहारिकः पारमार्थिको वाऽयं घटः स्वसमानाधिकरणप्रातिभासिकात्यन्ताभावप्रतियोगीति ज्ञानकाले एतद्घटे मिथ्यात्वव्यवहाराभावात् पारमार्थिकमिदं पारमार्थिकान्यस्य स्वसमानाधिकरणाभावस्य प्रतियोगीति ज्ञानकाले इदं मिथ्येति व्यवहाराभावाच्च तदन्यदित्यन्तं प्रतियोगित्वविशेषणम् । ननु पारमार्थिकत्वं मिथ्यात्वम्, तथा च मिथ्यात्वघटितम्मिथ्यात्वमित्यात्माश्रयः, ज्ञाननिवर्त्यत्वाभावरूपं पारमार्थिकत्वमेव घटक

मित्युक्तावपि तद्घटितस्य प्रकृतमिथ्यात्वस्य मिथ्यात्वलक्षणत्वानुपपत्तिः ज्ञाननिवर्त्यत्वान्यस्य वैयर्थ्यादितिचेन्न; धूमप्रागभावादौ धूमादेरिव ज्ञान निवर्त्यत्वस्योक्तप्रतियोगित्वे विशेषणत्वात् अविनाशिस्वरूपस्य पारमार्थिकत्वस्य प्रकृते निवेशसम्भवाच्च । प्रातिभासिकनिष्ठं यत् स्वसमानाधिकरणाभावप्रतियोगित्वं विनाशिनिष्ठं यदप्रातिभासिकस्य स्वसमानाधिकरणात्यन्ताभावस्य प्रतियोगित्वं तयोरन्यतरवत्वं मिथ्यात्वमिति तु निष्कर्ष इति । तन्न;- पारमार्थिके ब्रह्मणि प्रातिभासिकाभावप्रतियोगित्वमादाय मिथ्यात्वापत्तिवारणाय प्रातिभासिकाभावप्रतियोगिताभेदनिवेशस्यावश्यकत्वेपि तादृशप्रतियोगितायां निष्ठान्तविशेषणवैयर्थ्यात् । न च तन्न निष्ठान्तानुपादाने स्वाप्नगजादेर्मिथ्यात्वव्यवहारानुपपत्तिः दृश्यत्वहेतोस्तत्र व्यभिचारापत्तिश्च प्रातिभासिकाभावं स्वप्ने प्रतीतमादायैव मिथ्यात्वस्य वक्तव्यत्वात्, स्वप्ने च व्यावहारिकाभावस्य प्रत्यक्षादिना ज्ञानासम्भवादिन्द्रियाणामुपरतत्वात्, अभावेऽनुभूयमानप्रत्यक्षत्वस्यापलापे स्वाप्नाभावानां स्मरणादेर्वक्तुमशक्यत्वात् । अथ रथानित्यादिस्वप्ने पदार्थसृष्टिप्रतिपादकश्रुतेश्च, तादृशस्वप्नदृष्टगजतदभावयोरुभयोरपि प्रातिभासिकत्वावश्यकत्वादिति वाच्यम्;- स्वाप्नगजादौ विद्यमाने प्रातिभासिकाभावप्रतियोगित्वे प्रातिभासिकाभावप्रतियोगिताभिन्नत्वाभावेपि तादृशप्रतियोगिताभेदस्य प्रातिभासिकस्यैव तादृशप्रतियोगित्वे सत्त्वेन प्रातिभासिकाभावप्रतियोगिताभेदविशिष्टप्रातिभासिकाभावप्रतियोगित्वज्ञानादेव तद्दशायां मिथ्यात्वव्यवहारनिर्वाहात्; अन्यथा व्यावहारिकपारमार्थिकान्यतरानिष्ठत्वं प्रतियोगितायां निवेश्य तादृशविशेषणविशिष्टप्रातिभासिकाभावप्रतियोगिताभेदस्य व्यावहारिकस्यैव मिथ्यात्वलक्षणघटकत्वे स्वप्ने इन्द्रियाणामुपरतत्वेन तादृशव्यावहारिकभेदघटितामिथ्यात्वस्य प्रत्यक्षासम्भवेन मिथ्यात्वव्यावहारानिर्वाहात् । जाग्रत्कालिकव्यवहारस्य च व्यावहारिकाभावघटितामिथ्यात्वेनैव निर्वाहात् ।

यत्तु- स्वाप्नगजादीनामतिरिक्तव्यावहारिकाभावकल्पने गौरवाज्जाग्रद्दशायामपि प्रातिभासिकपरस्परात्मकाभावघटितमेव मिथ्यात्वं प्रतीयत इति । तन्न; यतो जागरे इहेदानीं स्वाप्नो गजो नास्तीति चाक्षुषादिप्रत्यये स्वाप्नो गजाभावो न भासते तस्यानैन्द्रियकत्वेनेन्द्रियजन्यज्ञाने भानानर्हत्वात् । तस्य जाग्रत्काले बाधप्रसङ्गेन तद्बुद्धेर्भ्रमत्वापत्तेश्च । किन्तु स्वाप्नगजादिप्रतियोगिको व्यावहारिको ऽभाव एव भासते, तथाच तादृशगजादेर्व्यावहारिकाभावस्य क्लृप्तत्वेन गौरवविरहात् ।

यदपि यस्य चैत्रत्वादिजातिविशेषस्य जाग्रत्काले न प्रत्यक्षम्, किन्तु स्वप्न एव नानाव्यक्तिषु प्रत्यक्षं तदवच्छिन्नाभावस्य व्यावहारिकत्वेनाक्लृप्तत्वात् व्यावहारिकतत्कल्पने गौरवेण प्रातिभासिकाभावघटितस्यैव मिथ्यात्वस्य वाच्यतया प्रतियोगितायां निष्ठान्तानुपादाने तादृशचैत्रत्वादिजात्यवच्छिन्ने दृश्यत्वस्य व्यभिचार इति तद्वारणाय निष्ठान्तसार्थक्यमिति । तन्न;- तत्रापि द्रव्यत्वादिसामान्यधर्मावच्छिन्नाभावस्य व्यावहारिकस्य क्लृप्तत्वेन तादृशाभावमादायैव मिथ्यात्वस्य सूपपादत्वात् ।

यदपि तादृशजात्यवच्छिन्ने द्रव्यत्वादिसामान्यवत्त्वस्याप्यज्ञाने तत्र तत्सत्त्वे मानाभावेन सामान्याभावस्य न तत्प्रतियोगित्वमिति । तन्न;- सत्तादात्म्यस्य तत्र मानाभावे अपसिद्धान्तप्रसङ्गेन तादृशधर्मावच्छिन्नाभावमादायैव तत्र मिथ्यात्वोपपादनसम्भवात् ।

वस्तुतस्तु स्वाप्नगजाद्यभावस्य स्वाप्नार्थबाधकधीविषयत्वाभावेन तद्घटितमिथ्यात्वमित्ययुक्तमेव, बाधकधीविषयाभावस्यैव मिथ्यात्वघटकत्वात्। अन्यथा घटादेरपि प्रातिभासिकाभावघटितमिथ्यात्वापत्तेः मनोवच्छिन्नं जीवरूपं ब्रह्मरूपं वा चैतन्यं अविद्यावच्छिन्नं ब्रह्म वा स्वाप्नाध्यासाधिष्ठानमिति भवद्भिः स्वीकारेण स्वाप्नगजाभावावच्छिन्नचितोऽधिष्ठानत्वाभावात्। स्वाप्नगजाभावादेः प्रातिभासिकत्वेनाज्ञानविषयतानवच्छेदकत्वात्।

यत्तु स्वाप्नाभावबुद्धेर्बाधकत्वानुभवात् मनोवच्छिन्न इव स्वाप्नाभावावच्छिन्नेपि चैतन्ये अव्यवस्थाज्ञानमङ्गीक्रियते, न च प्रातिभासिकत्वविरोधः । तत्तदज्ञानान्यथाज्ञानाभावस्य तत्र निवेशात् । अन्यथा मानसोपि साक्षिभास्यतयाऽज्ञानविषयतावच्छेदकत्वविरोधात् , तथाचेदं गजाभाववदिति स्वाप्नबुद्ध्युत्तरकालावच्छेदेन गजाद्यभावावच्छेदेनाज्ञानविषयत्वसम्भवात्तदानीमुत्पन्नस्य अयं गज इत्यादिस्वाप्नस्य तदुत्तरोत्तरक्षणे अयं गजाभाववानिति धिया बाधः । अथवा स्वाप्नरजताद्यभावोत्पत्तेः पूर्वं प्रकाशाप्रसक्तावपि पश्चात्तद्धीबाधकत्वानुभवादेव तदवच्छेदेनाज्ञानविषयत्वं भाव्यवच्छेदेनाज्ञानविषयत्ववदिति गुर्व्यामुक्तम् । तन्न;- प्रातिभासिकस्य ज्ञातैकसतोऽज्ञानविषयतावच्छेदकत्वायोगात् । अथवेत्यादिकल्पे पूर्वसिद्धतमसोहीत्यादिन्यायविरोधात् । अतः प्रातिभासिकाभावस्य बाधकधीविषयत्वाभावात्तद्घटितमिथ्यात्वानुपपत्तिः । न च बाधकधीविषयाभावघटितं मिथ्यात्वमिति न नियमः, प्रपञ्चाभावस्य तद्बाधकनिर्विकल्पकधीविषयत्वाभावादिति वाच्यम् ;- तदभावाद्यविषयकस्य निर्विकल्पकस्य प्रपञ्चभ्रमनिवर्तकताया एवानुपपत्तेः । यत्तु यच्च पारमार्थिकनिष्ठं व्यावहारिकाभावप्रतियोगित्वं तदन्वदित्यप्यसङ्गतम् । भवन्मतेपि पारमार्थिकनिष्ठस्य व्यावहारिकाभावप्रतियोगित्वस्याप्रसिद्ध्या साध्याप्रसिद्धेः । नचेदं मिथ्यात्वस्य व्यावहारिकं लक्षणम् , तत्र नाप्रसिद्धिर्दोषः, तज्ज्ञानमात्रस्य मिथ्यात्वव्यवहारे हेतुत्वादिति वाच्यम् ;- व्यावहारिकलक्षणरूपत्वेपि साध्यनिर्वचनरूपत्वानपायात् ; अन्यथा साध्यनिर्वचनावसरे तदुक्त्यसङ्गतेः ।

नच पारमार्थिकस्यापि सम्बन्धान्तरावच्छिन्नाभावप्रतियोगितासम्भवान्न साध्याप्रसिद्धिः । यद्वा व्यावहारिकनिरूपितत्वपारमार्थिकनिष्ठत्वोभयाभाववत्त्वमुक्तविशेषणेन विवक्षितमिति नाप्रसिद्धिरिति वाच्यम् ; एवमपि प्रतियोगितायाः प्रतियोगिस्वरूपत्वपक्षे साध्याप्रसिद्धेर्दुर्वारत्वात् । घटादिनिष्ठ

व्यावहारिकाभावप्रतियोगित्वप्रातिभासिकाभावप्रतियोगित्वयोरैक्येन भेदद्वय विशिष्टत्वस्य तादृशप्रतियोगितायामभावात् , प्रतियोगितायाः प्रतियोगितावच्छेदकरूपत्वांगीकारपक्षेप्युक्तसाध्यप्रसिद्धिर्दुर्वारा । व्यावहारिकप्रातिभासिकाभावप्रतियोगित्वयोर्द्वयोरपि रजतत्वरूपत्वेनाभिन्नत्वात् । एवमेतत्पक्षे भेदस्याव्याप्यवृत्तित्वे सिद्धसाधनं दुर्वारम् । प्रातिभासिकाभावप्रतियोगितायामपि प्रातिभासिकव्यावहारिकोभयनिष्ठायां प्रातिभासिकावच्छेदेन व्यावहारिकपारमार्थिकान्यतरनिष्ठप्रातिभासिकाभावप्रतियोगितात्वावच्छिन्नभेद-सम्भवात् । भवद्भिर्भेदस्याव्याप्यवृत्तित्वानङ्गीकारेपि प्रकृतानुमानबलेनैव तादृशभेदविशिष्टप्रातिभासिकाभावप्रतियोगितासिद्धिमादायार्थान्तरस्य दुर्वारत्वात् । नचोक्तभेदद्वयावच्छिन्नाधेयतानिरूपिताधिकरणत्वस्य साध्यत्वाङ्गीकारान्नोक्तार्थान्तरम् , प्रातिभासिकावच्छेदेन तादृशाभावप्रतियोगितायामुक्तभेदसत्त्वेपि तद्विशिष्टाधिकरणत्वस्य व्यावहारिकघटादावसम्भवादिति वाच्यम् ;- तथा सति पारमार्थिकनिष्ठत्वावच्छिन्नप्रतियोगिताकभेदावच्छिन्नाधेयतानिरूपिताधिकरणत्वमात्रस्य साध्यतयैव सर्वसामञ्जस्ये तदितरांशवैयर्थ्यस्य दुर्वारत्वात्,तस्मिन् तद्वृत्तित्वावच्छिन्नभेदावच्छिन्नाधेयतानिरूपकत्वासम्भवेन घटादेः पारमार्थिकत्वे पारमार्थिकत्वावच्छिन्नभेदावच्छिन्नाधेयतानिरूपिताधिकरणत्वस्य घटादावसम्भवात् । अखण्डाभावघटकतया कथंचिदितरांशस्य सार्थक्योपपादनसम्भवेपि प्रातिभासिकाभावप्रतियोगितायामपि प्रातिभासिकाभावप्रतियोगितात्वावच्छिन्नभेदस्य व्याप्यवृत्तेरेव प्रकृतानुमानबलेन सिद्धिमादायार्थान्तरं दुर्वारम् । तेन सम्बन्धेन तदधिकरणे तत्सम्बन्धावच्छिन्नतदत्यन्ताभावसम्भववत्तस्मिन्नपि तद्भेदसम्भवाविरोधात् । किंच घटाद्यधिकरणे तदत्यन्ताभावासिद्धावपि घटाभावाधिकरण एव घटाद्यधिकरणतासिद्धिमादायार्थान्तरं दुष्परिहरम् । न च स्वाधिकरणताव्यापकाभावप्रतियोगित्वं विवक्षितमिति नोक्तार्थान्तरमिति वाच्यम् ;- स्वाधिकरणे तदत्यन्ताभावासिद्धावपि स्वाधिकरणतासमानाधिकरणभेदप्रतियोगितावच्छेदके

प्यभावे ताद्दशभेदप्रतियोगितावच्छेदकत्वावच्छिन्नभेदासिद्धिमादायार्थान्तरस्य दुर्वारत्वात् । एतेन प्रातिभासिकनिष्ठं यत् स्वसमानाधिकरणाभावप्रतियोगित्वं विनाशिनिष्ठं यदप्रातिभासिकस्य स्वसमानाधिकरणात्यन्ताभावस्य प्रतियोगित्वं तदन्यतरवत्त्वं मिथ्यात्वमिति निष्कर्ष इत्यपि निरस्तम् । प्रातिभासिकनिष्ठप्रातिभासिकाभावप्रतियोगिताया घटादौ सिद्धिमादायार्थान्तरस्यानायासेन सम्भवात् । एवं घटादेर्ज्ञानाबाध्यत्वाभावरूपपारमार्थिकत्वसद्भावेपि विनाशित्वांगीकारमात्रेण निरुक्तसाध्यसिद्ध्यार्थान्तरं तदवस्थमेव । न च विनाशित्वे सति स्वसमानाधिकरणाप्रातिभासिकाभावप्रतियोगित्वमेव मिथ्यात्वमिति तत्सिद्धौ कथमर्थान्तरमिति वाच्यम् ;- सत्यत्ववादिभिरनङ्गीकृतत्वमात्रेण तस्य मिथ्यात्वरूपत्वे स्वसमानाधिकरणाप्रातिभासिकाभावप्रतियोगित्वमात्रस्यैव तथात्वसम्भवेन विनाशिनिष्ठत्वनिवेशवैयर्थ्यात् । यदि च स्वमते मिथ्यात्वव्यवहारप्रयोजकं यद्रूपं तदेव साध्यम् , ताद्दशाभावप्रतियोगित्वमात्रं न ताद्दशम् , प्रतियोगिनि पारमार्थिकत्वज्ञानदशायां ताद्दशाभावप्रतियोगित्वज्ञानेपि मिथ्यात्वव्यवहारानभ्युपगमादित्युच्यते, तदा विनाशिनिष्ठत्वविशेषितमपि तत्तथैव, विनाशित्वज्ञानेपि पारमार्थिकत्वज्ञानसम्भवात् । ज्ञानबाध्यत्वाभावरूपपारमार्थिकत्वेन विनाशित्वस्याविरोधात् । अत्र मिथ्यात्वघटकः प्रपञ्चाभावो व्यावहारिकः पारमार्थिको वेति परेषां पक्षद्वयम् ; तत्राद्यपक्षोऽनुपपन्नः, प्रपञ्चाभावस्य व्यावहारिकत्वे ताद्दशाभावस्यापि प्रकृतानुमानेनात्यन्ताभावबोधनात् ताद्दशाभावप्रतियोगिनि प्रपञ्चे निषेधापेक्षया अधिकसत्त्वस्यापत्तेः प्रपंचस्य ब्रह्मधर्मिकस्वाभावाभावबोधकमिथ्यात्वानुमानादिरूपप्रमाणकत्वात् तद्धर्मिकस्वाभावसत्तादिकसत्त्वापत्तिः । यद्यद्धर्मिकस्वाभावाभावबोधकप्रमाणकं तत्तद्धर्मिकस्वाभावसत्ताधिकसत्ताकमिति व्याप्तेः, यथा रजते नेदं रजतमिति भ्रमोत्तरमिदं नारजतमिति प्रत्यक्षप्रमित्युत्पत्तौ रजतत्वं रजतधर्मिकस्वाभावाभावबोधकप्रमाणकं रजतधर्मिकरजतत्वाभावगतप्रातिभासिकसत्त्वापेक्षयाधिकसत्ताकम् । इत्थं च

प्रपञ्चापेक्षया तन्निषेधस्य न्यूनसत्ताकत्वान्न्यूनसत्ताकाभावघटितमिथ्यात्व सम्भवः ।

यत्तु- ध्वंसप्रागभावाधिकरणेत्यन्ताभावमनङ्गीकुर्वतां प्राचां मते घट ध्वंसावच्छिन्नकपालनिष्ठप्रातिभासिकघटे पूर्वोक्तव्याप्तेर्व्यभिचारः, तादृश कपाले घटात्यन्ताभावस्याभावेन तादृशकपालनिष्ठप्रातिभासिकघटे तद्ध र्मिकस्वाभावाभावबोधकप्रमाणकत्वसत्त्वेपि तद्धर्मिकस्वभावसत्ताधिकसत्त्वा भावात् । अतस्तत्र व्यभिचारवारणाय स्वाभावाबोधकत्वे सति स्वा भावाभावबोधकत्वरूपं स्वाभावाभावमात्रबोधकत्वमापादककोटौ निवेश्यम् ; तथा च घटध्वंसावच्छिन्नकपाले घटतदत्यन्ताभावान्यतरत्वावच्छिन्नाभाव ग्राहकप्रत्यक्षादिप्रमाणस्य घटाभावाग्राहकत्वेन घटाभावाग्राहकत्वविशिष्टघटा भावाभावग्राहकत्वरूपघटाभावाभावमात्रग्राहकत्वान्न व्यभिचारः । एवं ब्रह्मणि प्रपञ्चाभावाभावबोधकस्य मिथ्यात्वानुमानस्य 'नेह नाने' त्यादि श्रुतेश्च प्रपंचाभावबोधकत्वात् मात्रपदार्थघटितनिरुक्तापादकस्यैव प्रपंचे असत्त्वान्न स्वाभाविकसत्ताकत्वापत्त्या तात्विकत्वापत्तिरिति । तन्न;- उक्तरीत्या मात्रपदार्थस्यापादककोटौ निवेशेपि घटध्वंसावच्छिन्नकपालनिष्ठ प्रातिभासिकघटे व्यभिचारावारणात् , तादृशकपाले घटाभावबोधकस्य घटाभावाभावमात्रबोधकस्य कपाले घटाभावो नास्तीत्याकारकस्यापि प्रत्य क्षादिप्रमाणस्य सम्भवात् । एवं ब्रह्मण्याकाशाभावो नास्तीत्याकारकस्याका- शाभावमात्रमिथ्यात्वग्राहकस्यापि प्रमाणस्य सम्भवेन तादृशप्रमाणस्य ब्रह्मणि स्वाभावाबोधकत्वे सति स्वाभावाभावबोधकतया तादृशप्रमाण त्वरूपापादकस्याकाशादिप्रपंचेपि सत्त्वेन तत्र ब्रह्मगताकाशाभावापेक्ष याधिकसत्त्वापत्तेश्चावारणात् । प्रत्येकमाकाशाभावत्वाद्यवच्छिन्नपक्षकमिथ्या त्वानुमितेराकाशत्वावच्छिन्ने मिथ्यात्वावगाहिसमूहालम्बनरूपायाः, कदा चित् सम्भवेपि सर्वदा तादृशानुमितिरुक्तसमूहालम्बनरूपैव जायत

इत्यत्र मानाभावात् । नच यो यन्निष्ठविशेष्यतानिरूपितस्वाभावनिष्ठ प्रकारताशालिप्रमितिकान्यत्वे सति यन्निष्ठविशेष्यतानिरूपितस्वाभावाभाव प्रकारताशालिप्रमितिकस्स तन्निष्ठस्वाभावापेक्षयाधिकसत्ताक इति व्याप्त्यङ्गी कारान्नोक्तदोषद्वयावकाशः, तादृशकपालनिष्ठघटस्य कपालधर्मिकस्वाभाव प्रकारकप्रमितिकत्वाद्वियदादेश्च ब्रह्मधर्मिकस्वाभावप्रकारकप्रमितिकत्वेन तादृशप्रमितिकान्यत्वघटितापादकाभावादिति वाच्यम् ; तथासत्युक्तव्याप्तेरेवा प्रसिद्ध्यापत्तेः । रजते नेदं रजतमिति भ्रमोत्तरमिदं नारजतमिति प्रमितिस्थलेपि रजतत्वस्य रजतधर्मिकस्वाभावप्रकारकप्रमितिकान्यत्वाभावात् रजतेपि सम्बन्धान्तररूपान्तरावच्छिन्नप्रतियोगिताकरजतत्वाभावस्य प्रमितत्वात् । नच स्वावच्छिन्नयत्सम्बन्धावच्छिन्नस्वाभावत्वावच्छिन्नाभाव प्रकारकयद्धर्मिकप्रमितिको यो धर्मस्स तन्निष्ठतत्सम्बन्धावच्छिन्नस्वावच्छिन्नाभवापेक्षयाधिकसत्ताकवस्तुवृत्तिरिति नियमे न दोषः, समवायावच्छिन्नरजतत्वत्वावच्छिन्नाभावाभावप्रकारकरजतधर्मिकप्रमितिकत्वस्य रजतनिष्ठसमवायावच्छिन्नरजतत्वाभावाधिकसत्ताकत्वस्य च रजतत्वे सत्त्वादिति वाच्यम् ;- तथा सत्युक्तकपालनिष्ठघटवृत्तिप्रातिभासिकघटत्वे व्यभिचारात् । तत्र स्वावच्छिन्नसमवायसम्बन्धावच्छिन्नाभावाभावप्रकारककपालविशेष्यकप्रमितिकत्वस्य सत्वेपि तादृशकपालनिष्ठसमवायावच्छिन्नघटाभावाधिकसत्ताकत्वविरहात् । उक्तरीत्या मात्रपदार्थनिवेशेपि नोक्तव्यभिचारवारणसम्भवः । तत्र कपालविशेष्यकसमवायावच्छिन्नघटत्वावच्छिन्नाभावप्रकारकप्रमित्यसत्वेन तादृशप्रमितिकान्यत्वस्यापि तादृशघटत्वे सत्त्वात् । कपाले समवायेन घटो नास्तीति प्रतीतिस्तन्मते प्रमात्वासम्भवात् । ध्वंसस्य सामान्यधर्मावच्छिन्न प्रतियोगिताकत्वस्य प्राचीनैरंगीकारेपि सम्बन्धावच्छिन्नप्रतियोगिताकत्वस्यानङ्गीकारात् ।

तस्मात् स्वाभावप्रकारप्रकारकयद्धर्मिकप्रमितिको यो भावस्सस्वाधिकसत्ताकस्वप्रतियोग्यधिकरणवृत्तिरिति व्याप्तिरंगीकार्या । तत्र च नोक्तघटे

व्यभिचारः । तादृशकपाले समवायावच्छिन्नघटात्यन्ताभावस्य घटस्य च प्रातिभासिकत्वेपि तादृशघटाभावाधिकसत्ताकस्य घटध्वंसस्य सत्त्वात् । प्राचीनमते घटात्यन्ताभावस्य घटतद्ध्वंसतत्प्रागभावैतत्त्रितयप्रतियोगिकत्वांगीकारात् । एवं च प्रपंचाभावस्यापि स्वाभावप्रकारकब्रह्मविशेष्यकप्रमितिकत्वात्, स्वाधिसत्ताकप्रपंचवद्वृत्तित्वापत्त्या प्रपंचस्य पारमार्थिकत्वापत्ति र्दुर्वारा । प्रपंचाभावस्य पारमार्थिकतापक्षोप्ययुक्तः, अद्वैतहानेः । नच तस्य ब्रह्मस्वरूपत्वान्नाद्वैतहानिरिति वाच्यम् ; अभावत्वविशिष्टरूपेणाभावस्य ब्रह्मस्वरूपत्वासम्भवात् । केवलरूपेण ब्रह्मस्वरूपतास्वीकारस्य व्यर्थत्वात्। न च भावाभावयोर्विरोधभङ्गार्थं विषयसत्ताकत्वस्यावश्यकतया अभावत्वविशिष्टस्य पारमार्थिकत्वासम्भवात्तत्तादात्म्यापन्नकेवलरूपस्य तत्स्वीकार इति वाच्यम् ;- तत्तत्प्रतियोगिकात्यन्ताभावत्वरूपेणैवाभावस्य प्रतियोगिविरोधित्वेन विरोधभङ्गार्थं तेनैव रूपेण प्रतियोगिभिन्नसत्ताकत्वस्यावश्यकत्वात्, तदस्वीकृत्य केवलब्रह्मरूपेण भिन्नसत्तास्वीकारस्य व्यर्थत्वेनाभावस्य ब्रह्मस्वरूपतास्वीकारस्य विफलत्वात् । (किंचाभावस्य ब्रह्मरूपत्वे प्रपंचाधिकरणीभूतब्रह्मवृत्तित्वाभावेन स्वसमानाधिकरणाभावघटितमिथ्यात्वानुपपत्तिः, अभेदे आधाराधेयभावासम्भवात् । विशिष्टकेवलयोर्भेदेपि तदनुपपत्ति र्दुर्वारा । तयोराधाराधेयभावादर्शनात । अन्यथा घटो द्रव्यमितिवत्तत्र द्रव्यमिति प्रत्ययापत्तेः ।

यत्त्वन्यत्र तत्स्वीकारेपि प्रकृते तथाङ्गीक्रियते घटाभावे घटो नास्तीति प्रतीतिवन्नेहनानेति प्रतीतेस्तुल्यत्वात्, यद्वा स्वाधिकरणसम्बन्धित्वमेवाभावे निवेश्यते, अभावप्रत्यये सम्बन्धभाननियमात्, आधारत्वन्तु सति सम्भवे यथा पृथिव्यां गन्धाभावोनेत्यादौ, चैत्रे गोन्यता नास्तीत्यादौत्वसम्भवान्न तद्भातीति; तन्न;— यथा तार्किकादिमते -गुणत्ववतिज्ञाने विषयतासम्बन्धेन गुणत्वाभावसत्त्वेपि गुणत्वस्य न मिथ्यात्वम्। तथा प्रपंचवति ब्रह्मचैतन्ये तादात्म्येन तद्भावसत्त्वेपि

मिथ्यात्वानुपपत्तेः चिच्चैत्यतादात्म्यस्यैव विषयतारूपताया भवद्भिस्स्वीकारात्। एवं तद्धर्मावच्छिन्नाधिकरणनिष्ठाभावीयतद्धर्मावच्छिन्नप्रतियोगित्वस्य साध्यत्वे दृष्टान्ते साध्यवैकल्यम्, शुक्तिरूप्यत्वावच्छिन्नाधिकरणे पारमार्थिकत्वाकारेण तदभावांगीकारेपि शुक्तिरूप्यत्वावच्छिन्नाभावानङ्गीकारात् । नास्ति नासीन्न भविष्यतीति प्रतीयमानत्रैकालिकनिषेधं प्रति स्वरूपेणापणस्थं रूप्यं पारमार्थिकत्वाकारेण प्रातिभासिकं वा प्रतियोगीति भवत्सिद्धान्तात् ।

यत्तु नास्ति नासीन्न भविष्यतीति बाधज्ञाने लौकिकपरमार्थरजतस्यैव स्वरूपेण निषेधप्रतियोगित्वावगाहने भ्रमबाधयोर्भिन्नविषयकत्वरूपवैयधिकरण्यापत्तिः, अप्रसक्तप्रतिषेधापत्तिश्च, शुक्तौ व्यावहारिकरूप्यस्य तादात्म्येन ज्ञातस्वरूपप्रसक्तेरभावात् ; अतः प्रातिभासिकस्यैव स्वरूपेण निषेधः; नचैवं त्रैकालिकनिषेधं प्रति स्वरूपेणापणस्थं पारमार्थिकत्वाकारेण प्रातीतिकं वा प्रतियोगीत्याचार्यवचनविरोध इति वाच्यम् ,- अस्याचार्यवचसः परमार्थलौकिकरजततादात्म्येन प्रतीते प्रातिभासिकं रजतं प्रतियोगीत्यर्थः, तच्च स्वरूपेण पारमार्थिकत्वेन वेत्यनास्थायां वाशब्दः; नचैवं आपणस्थ रूप्यमित्यस्य प्रातीतिकरजते व्यावहारिकरजततादात्म्येन प्रतीतत्वबोधकस्य तद्वचने उपादानं व्यर्थमिति वाच्यम् ,– पुरोवृत्तितादात्म्येनैव रजतं प्रतीयत इति न नियमः पारमार्थिकरजततादात्म्येनापि प्रतीयत इति प्रतिपादयितुं तदुपादानादिति । तन्न; इदं रजतमिति भ्रमे प्रातीतिके व्यावहारिकरजततादात्म्यभानाङ्गीकारस्य विफलत्वात् । नच सद्रजतप्राप्तिर्मे भवत्वितीच्छावतः तत्र प्रवृत्तिनिर्वाहाय तत्तादात्म्यभानमावश्यकमिति वाच्यम् ; – व्यावहारिकरूप्यनिष्ठत्वोपलक्षितस्य रजतत्वस्य प्रातीतिकरूप्येपि स्वीकाराच्छुक्तिगतस्येदन्त्वादेरिव सत्त्वस्यापि तत्र प्रत्ययाच्च सद्रजतमिति प्रत्ययोपपत्तेर्व्यावहारिकरूप्यस्य प्रातीतिके तादात्म्यारोपस्वी

कारस्य व्यर्थत्वात् , तं विनाप्युक्तप्रवृत्त्युपपत्तेः । नच व्यावहारिकनिष्ठरज तत्वादिकं प्रातीतिके न स्वीक्रियते, प्रातीतिकादपि व्यावहारिकरजतादिका र्यापत्तेः, प्रातीतिके प्रातीतिकस्यैव रजतत्वादेस्सम्बन्धः कल्प्यते, तथाच व्यावहारिकेनुभूतं यद्रजतत्वादि तद्विशिष्टविषयकेच्छावतां प्रातीतिके प्रवृत्ति निर्वाहायोक्ततादात्म्यारोप आवश्यक इति वाच्यम् ;– व्यावहारिकरजतादि निष्ठरजतत्वादेः प्रातीतिकव्यावृत्तत्वे रजतविशिष्टवैशिष्ट्यावगाहिबुद्धौ रज तत्वावच्छिन्नप्रकारनिश्चयस्य भ्रमप्रमासाधारण्येनैकहेतुतायाः किञ्चिद्ध र्मावच्छिन्नविशेष्यकरजतप्रकारकनिश्चयस्य भ्रमसाधारणैकप्रतिबध्यप्रति बन्धकभावस्य रजतादिलिङ्गकानुमितौ तल्लिङ्गकपरामर्शादेर्भ्रमसाधारण्येनैक हेतुतायाश्चानुपपत्तेः। व्यावहारिकत्वविशिष्टकारणकूटस्यैव फलोत्पत्तिव्याप्य तास्वीकारेण प्रातीतिकाद्व्यावहारिकरजतादिजन्यकार्यापत्तेः वारणसम्भवात् । नच रजतभ्रमसामान्ये व्यावहारिकरजततादात्म्यभानात्ताद्दशरजतत्वस्य प्रातीतिकव्यावृत्तत्वेपि व्यावहारिकमात्रवृत्तिरजतत्वावच्छिन्नविषयताया एव ताद्दशभ्रमेषु सत्त्वादेकहेतुतादिनिर्वाहसम्भव इति वाच्यम् ;— व्यावहारिकरजतस्यासन्निकृष्टत्वेन तत्तादात्म्यस्य प्रात्यक्षिकभ्रमे भाना सम्भवात् । भवद्भिर्ज्ञानलक्षणाप्रत्यासत्तेरस्वीकारात् । ज्ञानलक्षणया तस्य भानोपगमे चान्यथाख्यात्यापत्तेः ।

यत्तु प्रातीतिके तदुत्पत्तिकालोत्तरकालमुत्पन्नेन दूरस्थत्वादिदोषेण सन्निहितस्यानधिष्ठानस्यापि व्यावहारिकस्य तादात्म्यारोपो द्दष्टः, व्याव हारिकरजतस्येन्द्रियासन्निकृष्टत्वेपि तदंशे स्मृतिरूपभ्रमसम्भव इति । तन्न, एकत्र तादात्म्येनारोपितस्य प्रातिभासिकस्यान्यत्र तादात्म्येनारोपा सम्भवात् । विषमसत्ताकयोस्तादात्म्येन भानस्थले स्वोपादानाज्ञान विषयत्वनियमात् , स्वोपादानाज्ञाननिवर्तकज्ञानविषय एव तादात्म्यारो पाच्च । व्यावहारिकरजतांशे स्मरणात्मकस्येदं रजतमिति ज्ञानस्याभ्युप

गमे, अनिर्वचनीयरजतोत्पत्तिकल्पनं व्यर्थम, ग्रहणस्मरणात्मकज्ञान द्वयेनैव प्रवृत्त्यादिनिर्वाहात्, प्राभाकरैरपि ज्ञानद्वयीयविषयतयोर्निरूप्यनिरूपकभावस्य कल्पनात् । तस्मात्स्वाचार्योक्तेरन्यार्थकल्पनमयुक्तमेवेति पूर्वोक्त साधनवैकल्यं दुर्वारम् ।

यदपि निरुक्तमिथ्यात्वं 'नेह नानास्ति किंचने' ति श्रुत्या बोध्यत इति । तन्न; तादृशश्रुत्या ब्रह्मणि प्रपञ्चाभावबोधनसम्भवेपि तादृशाभावे प्रपञ्चसामानाधिकरण्यस्य प्रपञ्चान्यूनसत्ताकत्वस्य प्रतियोग्यवच्छेदकदेशकालावच्छिन्नत्वावच्छिन्नवृत्तिकान्यत्वयोरन्यतरस्य च बोधनासम्भवात् ।

यत्तूक्तश्रुताविहेतीदम्पदं दृश्यसामान्यविशिष्टब्रह्मपरम्, 'यस्मिन् पंच पंचजना आकाशश्च प्रतिष्ठितः' 'प्राणस्य प्राणमि'त्यादिपूर्ववाक्यगतस्य पंचजनशब्दस्य प्राणशब्दस्य च दृश्यसामान्ये लाक्षणिकत्वात् ; यथा "यस्य ब्रह्म च क्षत्रं चोभे भवत ओदन" इति वाक्यगतब्रह्मक्षत्रशब्दयोश्चराचरसामान्यलक्षकत्वमुक्तं सूत्रकृता "अत्ताचराचरग्रहणा" दिति; नानापदस्य च ब्रह्मभिन्नं तदन्वितवस्तुसामान्यं च किंचनेति निपातस्यार्थः, तस्यच नञर्थे प्रतियोगितयान्वयः, असधात्वर्थ आधेयता, आश्रयत्वमाख्यातार्थः, तथाच ब्रह्मभिन्नवस्तुसामान्याभावो द्वैतकालावच्छिन्नद्वैतवद्ब्रह्मनिरूपिताधेयताश्रय इति बोधः, लटः प्रकृतशब्दप्रयोगाधिकरणकालरूपवर्तमान कालार्थकतया उक्तवाक्याधिकरणकालस्यच द्वैताधिकरणकालरूपतया तदवच्छिन्नत्वस्यासधात्वर्थाधेयतायां भानसम्भवात् ; अथवा इहेतीदम्पदस्य द्वैतवद्ब्रह्मपरतया तादृशब्रह्मण एवोद्देश्यत्वेनोद्देश्यतावच्छेदककालावच्छिन्नत्वस्य द्वैताभावान्वितसप्तम्यर्थाधेयतारूपविधेये भानसम्भवात् मिथ्यात्व घटकस्य प्रतियोग्यवच्छेदकदेशाद्यवच्छिन्नत्वस्य भाननिर्वाहः; निरवच्छिन्न विशेषणताघटितं मिथ्यात्वमिति पक्षे निरवच्छिन्नविशेषणतासम्बन्धावच्छि

न्नाधेयत्वमेवासधात्वर्थः; नचोक्तरीत्या प्रपञ्चाभावे प्रपञ्चसामानाधिकरण्यादि लाभसम्भवेपि तत्र नान्यूनसत्ताकत्वलाभ इति वाच्यम्,-दृश्यवति दृश्याभावः अप्रातिभासिकः श्रुतिप्रमितत्वात् यागादिधर्मवत् ब्रह्मवच्चेत्यनुमानेन अप्रातिभासिकत्वभानसम्भवात् ; तथा चोक्तानुमितिसहकृततादृशश्रुतिजन्यबोधोत्तरं मनसैव मिथ्यात्वनिश्चयसम्भव इति। तन्न;- नञसमभिव्याहृतयादृशवाक्याद्यद्धर्मावच्छिन्ने यद्धर्मावच्छिन्नप्रकारकबोधोनुभवसिद्धः नञ्समभिव्याहृततादृशवाक्यात्तद्धर्मावच्छिन्ने तद्धर्मावच्छिन्नाभावबोधस्य प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमाविति न्यायसिद्धतया नञसमभिव्याहृतोक्तश्रुतिवाक्यात् ब्रह्मभिन्ने नानापदार्थे द्वैतवद्ब्रह्मवृत्तित्वस्य बोधेन नञ्सत्वे तादृशवाक्यान्नानापदार्थे तादृशब्रह्मवृत्तित्वाभावबोधस्य युक्तत्वात् , नञर्थविशेष्यकबोधस्याप्रामाणिकत्वात् । भूतले न घट इत्यादौ घटाद्यभावे भूतलवृत्तित्वान्वयबोधोपगमे पृथिव्यां गन्धो न जल इत्यादि वाक्यजन्यबोधस्य गन्धाद्येकविशेष्यकत्वानुभवविरोधः, तन्मते न जल इत्यतो गन्धाभाव एव जलवृत्तित्वप्रकारकबोधोपगमेन तत्प्रतीतावभावस्यैव विशेष्यतया पृथिव्यां गन्ध इत्यादितश्च तद्विशेष्यकबोधानुत्पत्त्या तयोरेकविशेष्यकबोधजनकत्वासम्भवात् । एवं भूतले घटो नास्तीत्यादावभावस्य भूतलास्तित्वविशेष्यत्वे तादृशाभावैक्येन घटौ न स्तः घटा न सन्तीत्यादौ द्विवचनाद्यनुपपत्तिश्च । नच भवन्मतेपि घटो नास्ति घटौ न स्त इत्यादावाख्यातार्थस्य प्रतियोगितया अभावविशेषणत्वमेव नतु घटविशेषणत्वमिति कथमाख्यातान्तस्य घटादिपदसमानवचनकत्वमिति वाच्यम्,—विशेषणपदस्य साक्षात्स्वार्थविशेष्यपदेनेव स्वार्थविशेष्यनिरूपितार्थविशेष्यपदेनापि समानवचनकत्वनियमाङ्गीकारात् । नच घटौ नस्त इत्यादावस्तित्वाभावस्य घटादावन्वयोपगमे एकघटवति घटौ नस्त इति व्यवहारो न स्यात् घटे तद्देशास्तित्वसत्त्वेन द्वित्वाद्यवच्छिन्नेपि तत्र तदभावासत्त्वा

दिति वाच्यम्;- द्वित्वाद्यवच्छेदेन प्रतियोग्यसत्त्वेन तदवच्छेदेनाभावसत्त्वे बाधकविरहात्, विशिष्टस्यातिरिक्तत्वादेव च विशेष्यवृत्तिप्रतियोगिकविशिष्टा नुयोगिकाभावानङ्गीकारेपि गुणे विशिष्टसत्ता नास्तीत्यादिव्यवहारनिर्वाहः। नच सामान्यादौ समवायेन घटो नास्तीत्यादौ सामान्यादिनिरूपितसम वायसम्बन्धावाच्छिन्नवृत्तित्वाप्रसिद्ध्या तदभावबोधासम्भवेन तादृशवाक्यात् समवायावाच्छिन्नघटाद्यभावे सामान्यादिवृत्तित्वबोधस्यावश्यकतया तद्वदुक्त श्रुतिवाक्यादप्यभावे ब्रह्मवृत्तित्वबोधसम्भव इति वाच्यम्;- प्रातिभासिक पदार्थमनङ्गीकुर्वतां नैयायिकानां नञर्थविशेष्यकबोधस्य तादृशवाक्यादा वश्यकत्वेपि भवतां तदनावश्यकत्वात्, सामान्यादिनिरूपितसमवायाव च्छिन्नवृत्तित्वस्यापि प्रातिभासिकस्य प्रसिद्धिसम्भवात्। भूतले घटो नास्तीति वाक्यात् कदाचिदभावविशेष्यकभूतलवृत्तित्वादिप्रकारकस्य कदाचित् घट विशेष्यकभूतलवृत्तित्वाभावप्रकारकस्य च बोधस्य स्वीकारे तादृशसमभि व्याहारज्ञानादीनां कारणताद्वयापत्त्या गौरवात्। उभयसाधारणकार्यतावच्छे दकैक्यस्य कथंचित्सम्भवेपि तादृशवाक्यधर्मिकद्विविधवाक्यार्थतात्पर्यज्ञानस्य पृथक्कारणत्वात कारणताधिक्यस्य दुर्वारत्वात्। उक्तश्रुतिवाक्यात् तात्पर्य वशाद्द्वैताभावे द्वैतवद्ब्रह्मवृत्तित्वबोधांगीकारसम्भवेपि नोक्तमिथ्यात्वबोधस-म्भवः, सम्बन्धान्तरावच्छिन्नद्वैताभावविषयकतया तादृशबोधानिर्वाहात्। नच निषेधस्य प्रसक्तिपूर्वकत्वेन 'यस्मिन् पंच पंचजना आकाशश्च प्रतिष्ठित' इति वाक्ये तादात्म्यसम्बन्धावच्छिन्नवृत्तित्वबोधकप्रतिष्ठितपदेन तादात्म्य सम्बन्धेन द्वैतस्य प्रसक्तत्वात् तत्सम्बन्धावच्छिन्नाभावबोध एवोक्तवाक्य तात्पर्यविषय इति तादृशबोधनिर्वाहाय तादात्म्येनेति पदमध्याहर्तव्यमिति वाच्यम्;- तादात्म्येनेत्यत्रावच्छिन्नत्वस्य तृतीयार्थत्वे तस्य नानापदार्था भावसंसर्गविधया भासमाने प्रतियोगित्वेन्वयासम्भवेनावच्छिन्नप्रतियोगिताक त्वस्य नञर्थाभावान्वयिन एव तृतीयार्थतया उपगन्तव्यतया कालिकादि

सम्बन्धावच्छिन्नद्वैतत्वावच्छिन्नाभावाव्यावर्तनात्, कालिकसम्बन्धावच्छिन्न द्वैताभावस्य कालिकसम्बन्धावच्छिन्नद्वैताधिकरणत्वस्य तादात्म्येन यो ऽभाव स्तत्समानियतत्वेन तदभिन्नतया तादात्म्यावच्छिन्नप्रतियोगिताकत्वानपायात् । नच तादात्म्यावच्छिन्नद्वैतत्वावच्छिन्नप्रतियोगितासम्बन्धेनैव नानाः पदार्थस्य नञर्थेन्वयः, तादात्म्येनेति पदसमभिव्याहारस्य तादृशसंसर्गक बोधे नियामकत्वान्न तस्य वैयर्थ्यमिति वाच्यम्;—एवमपि द्वैतवत्त्वावच्छेदकदेशकालावच्छिन्नत्वस्याभावे बोधानिर्वाहेण तद्घटितमिथ्यात्वबोधानिर्वाहात्, उद्देश्यतावच्छेदककालावच्छिन्नत्वस्य विधेये भानोपगमेप्यनिर्वाहात् । द्वैतवद्ब्रह्मरूपेदम्पदार्थे सप्तम्यर्थाधेयताया विधेयतयान्वयबोधासम्भवात्। विधेयत्वस्य प्रकारत्वानियतत्वेन विशेष्यत्वस्य विधेयत्वाविरोधित्वे पि नीलघट इत्यादितो घटोद्देश्यकनीलविधेयकान्वयबोधानुदयेन एकसुबन्त घटकपदार्थयोः परस्परमुद्देश्यविधेयभावेनान्वयबोधस्याव्युत्पन्नत्वात् । अत एवेदृशबोधतात्पर्येण एकसुबन्तघटकपदयोः प्रयोगे एकप्रसरताभङ्गो दोष इति शाब्दिका वदन्ति । अत एव च वषट्कर्तुः प्रथमभक्ष इत्यत्र भक्षणोद्देशेन प्राथम्यस्य विधेयत्वं दूषयित्वा प्राथम्यविशिष्टभक्षणस्य विधेयत्वं मीमांसकैः सिद्धान्तितम् ।

यत्तु एकसुबन्तघटकपदार्थयोः परस्परमुद्देश्यविधेयभावेन अन्वयबोधासम्भवेपि नक्षतिः, उक्तश्रुताविहेति सप्तम्यर्थो निरूपितत्वम्, अस धात्वर्थश्चाधेयत्वम्, एवंच सुबन्तार्थे द्वैतविशिष्टब्रह्मनिरूपितत्वे तिङ्न्तार्थासधात्वर्थाधेयत्वस्य विधेयतयान्वयबोधस्वीकारान्नानुपपत्तिरिति । तन्न, विशेषणीभूतविभक्त्यर्थोद्देश्यकविशेष्यीभूततिङन्तार्थविधेयकबोधस्यान्यत्रादृष्टत्वात् तयोरुद्देश्यविधेयभावस्यायुक्तत्वात् । अग्रावच्छिन्नो वृक्षस्संयोगी आद्यक्षणावच्छिन्नो घटो गन्धाभाववान् इत्यादौ देशकालयोरुद्देश्यतावच्छेदकस्थल एवोद्देश्यतावच्छेदकदेशाद्यवच्छिन्नत्वभानस्य प्रामाणिकत्वेप्यन्यत्र तद्भाने मानाभावाच्च ।

यत्त्वत्र द्वैतवत्त्वावच्छेदकदेशकालविशिष्टद्वैतवद्ब्रह्मण एवेदंशब्दार्थ-त्वान्न दोष इति । तन्न; तादृशविशिष्टस्य पूर्वमप्रक्रान्तत्वात्, 'यस्मिन् पञ्च पञ्चजना' इत्यत्र पञ्चजनशब्दस्य द्वैतावच्छेदकदेशकालयोर्लाक्षणिकत्वाङ्गीकारस्यात्यन्तमनुचितत्वात् । पंचजनशब्दस्य द्वैतसामान्यलाक्षणिकत्व वर्णनमप्ययुक्तम्, पञ्चेत्यस्यानन्वयप्रङ्गात् ; आकाशश्च प्रतिष्ठित इति पृथगाकाशोक्तिवैय्यर्थ्याच्च, 'प्राणादयो वाक्यशेषा' दिति सूत्रविरोधाच्च । तत्सूत्रे पञ्चजनशब्दस्य प्राणादिपरत्ववर्णनात् ।

यत्तु 'प्राणादयो वाक्यशेषादि' ति सूत्रमभ्युपगम्यवादमात्रम्, नहि 'यस्मिन् पंच पंचजना' इति मन्त्रे पंचजनशब्दः वाक्यशेषगतप्राणादिपरः, तस्य मन्त्रान्तरानुसारेण चेतनविशेषपरत्वात्, अथर्ववेदेहि तृतीयकाण्डे पञ्चमानुवाके समाम्नायते "यं त्वा होतारं मनसाभिसंविदुः त्रयोदश भौवनाः पंच मानवा" इति । अस्यार्थो वेदभाष्ये दर्शितः- अग्नेयं त्वा त्वां होतारं देवानामाह्वातारं मनसाभिसंविदुः सम्यग्जानन्ति ये त्रयोदशभौवनाः भुवनस्य महर्षेः पुत्राः विश्वकर्मप्रभृतयः त्रयोदशसंख्यकाः पंचमानवाः निषादपंचमाश्चत्वारो वर्णाः गन्धर्वाप्सरसो देवा यक्षा रक्षांसीत्येक इति । यमाय हर्म्यमवपन्पञ्चमानवाः' "पंचभिर्मानिवैर्यम" इत्यादिरपीहोदाहरणम्; तत्रापि निषादपंचमाश्चत्वारो वर्णाः पंचमानवा इति भास्करादिभिर्व्याख्यातम् । वर्णेषु पञ्चमत्वेन निषादग्रहणं अग्निसम्बन्धात् । अतएव मन्त्रवर्णे 'जना यदग्निमयजन्त पंचे' ति श्रूयत इति । तदपि न, तथांगीकारेपि प्राणादिशब्दस्य द्वैतसामान्यलाक्षणिकत्वायोगात् । एवमप्रातिभासिकत्वसाधकानुमानमप्यनुचितम् 'अजामेकां लोहितशुक्लकृष्णा' मित्यत्र प्रातिभासिकाजारूपाजात्व कल्पनस्य 'असौ वा आदित्यो देवमध्वि' त्यादौ मधुत्वकल्पनस्य 'कल्पनोपदेशाच्च मध्वादिवदविरोध' इति सूत्रे भवतां भाष्ये स्वीकृतत्वेन तत्र व्यभिचारात् । स्वाप्निकपदार्थानाम् "अथरथानि" त्यादि श्रुतिप्रमितत्वेन तत्र व्यभिचाराच्च । एवं पारमार्थिकनिष्ठ

स्याप्रातिभासिकाभावप्रतियोगित्वस्य मिथ्यात्वरूपत्वाभावेन पारमार्थिका न्यनिष्ठाप्रातिभासिकाभावप्रतियोगित्वस्यैव मिथ्यात्वरूपतया उक्तप्रतियोगित्वे पारमार्थिकान्यनिष्ठत्वालाभेन मिथ्यात्वबोधानिर्वाहाच्च ।

यत्तु 'किंचने' त्यस्य 'अतोन्यदार्तमि' ति श्रुत्यादिमानेन विनाशितया प्रमितं दृश्यमित्यर्थकत्वादुक्तप्रतियोगितायां विनाशिनिष्ठत्वलाभात् उक्तमिथ्यात्वबोधनिर्वाह इति । तच्चिन्त्यम्, विनाशित्वविशिष्टात्मभिन्नत्वापेक्षया विनाशित्वस्य लघुतया तत्समनियतस्योक्तविशिष्टधर्मस्य प्रतियोगितावच्छेदकत्वासम्भवात् । नच विनाशित्वं प्रतियोगिन्युपलक्षणतया भाति आत्मभिन्नत्वं च प्रतियोगितावच्छेदकतयेति नोक्तदोष इति वाच्यम्;- प्रतियोगितासंसर्गकाभावबुद्धौ प्रतियोगिकोटावुपलक्षणतया भानस्य शास्त्रकारैरनुपगमात् ।

यदपि यादृशाभावप्रत्यये यस्य धर्मस्य प्रतियोगिन्युपलक्षणतया भाने अतिप्रसङ्गादि बाधकं तत्रैव तदनभ्युपगमः, यथा घटो नास्ति नीलघटो नास्तीत्यादौ घटत्वस्य, यत्र तु न बाधकं तत्र तदभ्युपगम्यत एव, नैयायिकैरपि जात्यवच्छिन्नप्रतियोगिताकोभाव इति प्रतियोगिताप्रकारकज्ञाने जातित्वस्य द्रव्यत्वेन धूमो नास्तीत्यादौ द्रव्यत्वस्य चोपलक्षणतया भानांगीकारात्, प्रकृतेच ब्रह्मभिन्नत्वस्य प्रतियोगितावच्छेदकतया विनाशिदृश्यत्वस्योपलक्षणतया भाने न किंचिद्बाधकमिति । तन्न; स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नधर्म्यन्तरनिरूपितप्रकारत्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नप्रकारतानिरूपितसंसर्गतासम्बन्धेन ज्ञानं प्रत्यभावीयानुयोगिताविशेषभेदस्य कारणतया गदाधरादिभिः प्रतियोगिकोटावुपलक्षणतया भानवारणाय स्वीकृततया तादृशकारणव्यभिचाररूपबाधकस्य नीलो घटो नास्तीत्यादाविव प्रतियोगिकोटावुपलक्षणतया भानं यत्र तत्र सर्वत्र समानत्वात् । यथाहि स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नाभाव विशेष्यतानिरूपितप्रकारत्वानवच्छिन्ना

या नैल्यादिप्रकारकता तन्निरूपितविशेष्यत्वावच्छिन्नघटादिप्रकारतानिरूपि-तसंसर्गतासम्बन्धेन ज्ञानमनुयोगितायां न जायते, तत्रानुयोगिताभेदरूपकारणविरहात्, तथा तादृशसम्बन्धावच्छिन्नप्रकारत्वानवच्छिन्नविनाशित्वप्रका-रतानिरूपितविशेष्यत्वावच्छिन्नात्मागिन्ननिष्ठप्रकारतानिरूपितसंसर्गतासम्ब-न्धेनापि ज्ञानं न जायत इति समानमेव । विनाशिनिष्ठं बत्स्वसमानाधिकरणप्रातिभासिकाभावप्रतियोगित्वं तस्य मिथ्यात्वरूपत्वासम्भवः, द्वैतस्य पारमार्थिकत्वेपि विनाशित्वसम्भवादिति पूर्वमेवोक्तम् ।

यदप्युक्तश्रुतिजन्यबोधे द्वैतवति द्वैताभावविषयकत्वे आहार्यत्वापत्तिमाशंक्य, इदम्पदस्य दृश्यविशिष्टब्रह्मबोधकत्वेन दृश्यविशिष्टे ब्रह्मणि द्वैतत्वावच्छिन्नाभावबोधस्य आहार्यत्वासम्भवात्, एकधर्मिणि येन रूपेण प्रतियोगिभानं तद्रूपावच्छिन्नप्रतियोगिताकाभावावगाहिन एव ज्ञानस्याहार्यत्वात्, प्रकृते च रूपभेदान्न तदापत्त्या शाब्दत्वानुपपत्तिरुक्तबोधस्येति परिहृतम्; तदपि न, स्वविरोधिधर्मधर्मितावच्छेदककस्वप्रकारकज्ञानस्यैवाहार्यत्वेन भवन्मते द्वैततदभावयोर्विरोधानुपगमादाहार्यत्वशंकाया एवायुक्तत्वात् । नचाविरुद्धयोरपि संयोगतदभावयोरिव अविरुद्धत्वाज्ञानदशायां परस्परज्ञानयोः प्रतिबध्यप्रतिबन्धकभावोपगमात् निरुक्ताहार्यत्वघटकस्वविरोधित्वस्य स्वज्ञानप्रतिबन्धकतावच्छेदकविषयताश्रयत्वरूपस्य निवेशादाहार्यत्वशंकासामञ्जस्यमिति वाच्यम्;— एवमपि विनाशिदृश्यवत्त्वेन प्रतीयमाने ब्रह्मणि ब्रह्मभिन्नत्वेन तदभावलाभेपि विनाशिदृश्यत्वेन तदभावलाभं विना मिथ्यात्वालाभादुक्तपरिहारासंगतेः । तेन रूपेण तद्वत्त्वेन प्रतीयमाननिष्ठाभावीयतद्रूपावच्छिन्नतन्निष्ठप्रतियोगितायाः एव मिथ्यात्वरूपत्वात् । उक्तरीत्या श्रुतिजन्यबोधस्याहार्यत्वपरिहारेप्यनुमितेराहार्यत्वापरिहारात् । मिथ्यात्वानुमितेराहार्यत्वेपि प्रमाणत्वे श्रुतिजन्यबोधे आहार्यत्वांगीकारेपि बाधकविरहेण तत्परिहारस्यानुचितत्वात् ।

यदपि उक्तश्रुतिजन्यबोधस्याहार्यत्वमङ्गीक्रियते, एवं च विनाशिदृश्यस्वस्य प्रतियोगितावच्छेदकतया भानान्मिथ्यात्वलाभः; नच विनाशिदृश्यवद्ब्रह्मणि विनाशिदृश्यं नास्तीत्याहार्यस्य अगत्वात् कथं ब्रह्मणि विनाशिदृश्यत्वावच्छिन्नाभावसाधकत्वम्, तत्त्वेवा विनाशिदृश्यत्वावच्छिन्नमपि तत्र साधयेदिति वाच्यम्,—श्रुतेर्हि स्वतात्पर्यविषयीभूतानधिगतार्थे प्रमाणतया तत्साधकत्वम्, विनाशिदृश्यत्वावच्छिन्नं च ब्रह्मणि नानधिगतं नवा श्रुतितात्पर्यविषयः, लोकसिद्धत्वात्, किन्तु तदभाव एव, लोकासिद्धत्वात्, तथा च उक्ताहार्यमभावस्यैव साधकं न प्रतियोगिन इत्यस्य युक्तत्वात्; नचोक्तश्रुतेः बाधितार्थग्राहितयाऽप्रामाण्यं दुर्वारमेव, तथा चोक्तं दीधितौ "बाधेन हि न शब्दज्ञानं प्रतिबध्यते किन्तूत्पन्ने तत्राप्रामाण्यं गृह्यत" इतीति वाच्यम्,-लौकिकबाधकमानापेक्षया श्रुतेः प्राबल्यस्य सिद्धान्तसिद्धत्वात्, स्वापेक्षया प्रबलप्रमाणबाधितार्थग्राहिताया एवाप्रामाण्यप्रयोजकत्वादिति । तन्न,—प्रत्यक्षप्राप्त इव प्रत्यक्षबाधितेपि श्रुतेस्तात्पर्यसम्भवेनोक्तश्रुतेर्द्वैताभावसाधकत्वायोगात् । प्रत्यक्षबाधितेपि श्रुतेः प्रामाण्ये "आदित्यो यूपः" "यजमानः प्रस्तर" इत्यादौ मीमांसकानां लक्षणाकथनस्य भवतामपि प्रत्यक्षाविरोधाय तत्त्वमसीत्यादौ लक्षणावर्णनस्यायुक्ततापत्तेरिति दिक् ।

इति श्रीशेषकुलतिलकस्य यादवाद्रिनिवासरसिकस्यानन्ताचार्यस्य कृतौ न्यायभास्करे प्रतिपन्नोपाधावित्यादि मिथ्यात्वभङ्गस्तृतीयः ।

——(*)——

## अथ ज्ञाननिवर्त्त्यमिथ्यात्वभंगस्तुरीयः।

——(*)——

यदपि—' विद्वान्नामरूपाद्विमुक्त ' इति श्रुत्यर्थे विवदमानं प्रति साध्यान्तरमुक्तं ज्ञाननिवर्त्त्यत्वं वा मिथ्यात्वमिति। तन्न; ज्ञानजन्यध्वंस प्रतियोगित्वरूपस्य ज्ञाननिवर्त्त्यत्वस्योत्तरज्ञाननिवर्त्त्यपूर्वज्ञाने सत्त्वेन सिद्ध-साधनापत्तेः। अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वपक्षेप्युत्तरज्ञान निवर्त्त्यपूर्वज्ञानवदेव प्रपञ्चस्य सत्यत्वापत्त्या अर्थान्तरात्। नच ज्ञान त्वावच्छिन्नजनकतानिरूपितजन्यतावन्नाशप्रतियोगित्वमेव तत्, उत्तर विशेषगुणत्वावच्छिन्नजनकतानिरूपितजन्यतावन्नाशप्रतियोगित्वस्य पूर्वज्ञाने सत्त्वेपि नोक्तसिद्धसाधनम्, ज्ञानत्वावच्छिन्नजनकताघटितसाध्याभावादिति वाच्यम्;- तथासति बाधापत्तेः, अधिष्ठानसाक्षात्कारत्वावच्छिन्नजन कतानिरूपितजन्यतावन्नाशप्रतियोगित्वस्य प्रपंचे स्वीकारेपि ज्ञानत्वाव च्छिन्नजनकताघटितसाध्याभावात्। शुक्तिरूप्ये साध्यवैकल्यापत्तेश्च, तथैव तत्रापि ज्ञानत्वावच्छिन्नजनकताघटितसाध्याभावात्। ज्ञानत्वव्याप्यधर्माव च्छिन्नजनकतानिरूपितजन्यतावन्नाशप्रतियोगित्वविवक्षणेपि स्मृतित्वेन ज्ञान निवर्त्त्ये संस्कारे निश्चयत्वेन निश्चयनिवर्त्त्ये संशये भगवत्सङ्कल्पत्वेन तन्निवर्त्त्ये जगति च सिद्धसाधनम्, पूर्ववदर्थान्तरं वा। साक्षात्कारत्वेन ज्ञान निवर्त्त्यत्वविवक्षयोक्तदोषवारणेपि मुद्गरपातादिनिवर्त्त्ये घटादौ बाधः। एवं प्रपञ्चनाशं प्रति ब्रह्मज्ञानस्य न कारणता, चरमज्ञानजन्यनाशस्यानाशापत्त्या 'विद्वान्नामरूपाद्विमुक्त' इति श्रुतिविरोधापत्तेः, तस्य ज्ञानानिवर्त्त्यत्वात्सत्यत्वा पत्तेः, " अतोन्यदार्त "मिति श्रुतिबाधाच्च। तथा शुक्तिरूप्यादाव प्युक्तसाध्यसत्त्वे मानाभाव इति नव्याद्वैतिमते साध्याप्रसिद्धिश्च।

यत्तु- अप्रामाण्यज्ञानादिशून्यत्वजन्यपटुतमसंस्कारसहितसाक्षात्कार प्रमाव्यापकस्वस्वसंस्कारान्यतराभावप्रतियोगित्वं ज्ञाननिवर्त्त्यत्वम्, तादात्म्येन

तादृशप्रमां प्रति स्वसमानविषयकत्वकालिकविशेषणत्वोभयसम्बन्धावच्छिन्न प्रतियोगिताकस्याज्ञानतत्संस्कारान्यतराभावस्य स्वप्रयोजकाज्ञानसमानविषयकत्वस्वाश्रयकालपूर्वत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताकस्याज्ञानप्रयुक्ततत्संस्कारान्यतराभावस्य च व्यापकत्वात्तादृशभावप्रतियोगितामादायाज्ञानतत्प्रयुक्ततत्संस्कारेषु लक्षणसमन्वयः । या या अप्रामाण्यज्ञानादिशून्यशुद्धसाक्षात्कारप्रमा सा स्वसमानविषयकत्वकालिकविशेषणत्वोभयसम्बन्धावच्छिन्नाज्ञानाभाववती, या या स्वजन्यपटुतमसंस्कारसहितोक्तप्रमा सा निरुक्तोभयसम्बन्धावच्छिन्नाज्ञानतत्संस्कारान्यतराभाववतीति व्याप्तेः । अत्र द्वितीय व्याप्तौ सहितान्तोपादानाज्जीवन्मुक्तप्रमाकाले अज्ञानाभावेपि तत्संस्कार सत्त्वेनोक्तोभयसम्बन्धावच्छिन्नाज्ञानतत्संस्कारान्यतराभावस्य तादृशप्रमाया मसत्त्वेपि न व्यभिचारः । एवं या या स्वजन्यपटुतमसंस्कारसहितोक्त प्रमा सा स्वप्रयोजकाज्ञानसमानविषयकत्वस्वाश्रयकालपूर्वत्वोभयसम्बन्धाव च्छिन्नाज्ञानप्रयुक्ततत्संस्कारान्यतराभाववतीति च व्याप्तेः । स्वजन्य पटुतमसंस्कारसहिताधिष्ठानप्रमायां सत्यां तत्काले तत्समानविषयकाज्ञान तत्संस्कारयोस्तदुत्तरकाले च तादृशाज्ञानप्रयुक्ततत्संस्कारयोरसम्भवात् । नहि तादृशशुक्तिसाक्षात्कारप्रमाकाले शुक्त्यज्ञानतत्संस्कारयोस्तदुत्तरं वा तादृशाज्ञानप्रयुक्तरजततत्संस्कारयोस्सम्भव इति शुक्तिरूप्यादौ न साध्य विकलता । न चोक्तसम्बन्धद्वयेन कस्यचिद्योत्यन्ताभावस्तादृशप्रमाव्यापक स्तत्प्रतियोगित्वमेवास्तु, किमुक्तान्यतरात्यन्ताभावत्वनिवेशनेति वाच्यम्;—तथासति शशविषाणादावतिव्याप्तेः, तस्याप्युक्तसम्बन्धावच्छिन्नाभावस्य व्यधिकरणसम्बन्धावच्छिन्नाभावरूपस्य तादृशज्ञानव्यापकत्वात् । शशविषाणस्य च स्वीयसूक्ष्मावस्थारूपसंस्कारासत्त्वाच्च नोक्तान्यतराभावसम्भव इति न तत्रातिव्याप्तिः । नवा असत्त्वपर्यवसानमादायार्थान्तरम् । कार्याणांच तदधि ष्ठानतत्वसाक्षात्कारपर्यन्तं किंचिद्रूपमावश्यकम्, प्रळयकालेप्यदृष्टादिजन्यायाः कार्यसूक्ष्मावस्थायाः तत्कालसाधकश्रुत्यादिसिद्धत्वात्, " तद्धेदं तर्ह्यव्याकृत

मासी ' दित्यादिश्रुत्या तत्काले कार्यस्यानभिव्यक्तरूपेणावस्थितिबोधनात् , दण्डघातेन घटो नास्तीत्यादिप्रत्ययेन दण्डघातजन्यनाशावगाहनाच्च । नहि तार्किकादिमतेषि कार्यस्य नाश उपलभ्यते, परन्तु उक्तश्रुत्या घटो नाशत्व मापन्नः पूर्वावस्थैवोत्तरावस्था जातेत्याद्यनुभवेन च सिद्धनाशस्य पूर्वावस्था तादात्म्यापन्नोत्तरावस्थारूपत्वम् । नच पूर्वोत्तरावस्थयोस्तादात्म्यमनुपपन्न मिति वाच्यम्;- भिन्नकालीनयोः प्रतियोग्यनुयोगिभावसम्बन्धस्येव तादा त्म्यस्याप्यनुभवबलेन सम्भवात् । तथाच सर्वदा व्यवहारकाले कार्यस्य तादात्म्यापन्नं किंचित्कार्यरूपमस्ति, तत्वदर्शनं विना तदु च्छेदासम्भवादिति सत्कार्यवादस्साङ्ख्यानामिवास्माकमपि, परं स्वस्माकं तद्रूपं मिथ्येति विशेष इति । तन्न;- अत्यन्ताभेदे तादात्म्यसम्बन्धस्य भव त्सिद्धान्तेनङ्गीकारात्तादात्म्येन प्रमाया व्याप्यत्वकथनस्यायुक्तत्वात् । नच तादृशप्रमात्वव्यापकत्वमभावे निवेश्यत इति न दोष इति वाच्यम्;— तथापि तादृशप्रमात्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकधर्मवत्त्वरूप व्यापकतानिवेशे तादृशप्रतियोगितानवच्छेदकप्रमेयत्ववत्त्वमादाय सिद्धसाधन प्रसंगात्, तादृशाभावस्योक्तज्ञाने असत्त्वेप्युक्तव्यापकतासम्भवात् । नच स्व स्वीयसंस्कारान्यतरत्वावच्छिन्नाभावत्वेनैव व्यापकत्वं विवक्षितम्, स्वपदं च तत्तद्व्यक्तिपरम् , तथा च तादृशप्रमात्वव्यापकतावच्छेदकानुयोगिताविशिष्ट स्वस्वीयसंस्कारान्यतरत्वकत्वं साध्यं, अनुयोगितावैशिष्ट्यं च स्वनिरूपिता या स्वसमानविषयकत्वकालिकोभयसम्बन्धावच्छिन्नप्रतियोगिता तदवच्छेदकत्व स्वनिरूपितस्वप्रयोजकाज्ञानसमानविषयकत्वस्वपूर्वत्वोभयसम्बन्धावच्छिन्न प्रतियोगितावच्छेदकत्वान्यतरसम्बन्धेनेति वाच्यम्;—तथा सति घटतत्सं- स्कारान्यतरस्य स्वसमानविषयकत्वघटितसम्बन्धद्वयेनाभावमादायाज्ञानतत्सं स्कारान्यतरस्य च स्वप्रयोजकाज्ञानसमानविषयकत्वघटितसम्बन्धद्वयेनाभाव मादाय च सिद्धसाधनात् । तादृशाभावयोर्व्याधिकरणसम्बन्धावच्छिन्नाभाव- त्वेन घटादेर्ज्ञाननिवर्त्यत्वेपि केवलान्वयित्वात् । नच तादृशानुयोगिता

विशिष्टस्वस्वीयसंस्कारान्यतरत्वमेव साध्यम् , अनुयोगितावैशिष्ट्यं च स्व निरूपिततादृशप्रतियोगितान्यतरविशिष्टत्वसम्बन्धेन, विशिष्टत्वं च- स्वाव च्छेदकत्व-स्वावच्छेदकसम्बन्धावच्छिन्नाधेयतावच्छेदकत्वोभयसम्बन्धेन, त-थाच नोक्तव्यधिकरणसम्बन्धावच्छिन्नाभावमादाय सिद्धसाधनमिति वाच्यम्; सकलपक्षसाधारणस्य दृष्टान्तपक्षसाधारणस्य चानुगतस्वत्वस्याभावेन बाध-स्य साध्यवैकल्यस्य च प्रसक्तेः । नच तादृशप्रमात्वव्यापकतावच्छेदकं य द्ज्ञानतत्संस्कारान्यतराभावत्वं तदाश्रयनिरूपितस्वसमानविषयकत्वकालिको भयसम्बन्धावच्छिन्नप्रतियोगित्वप्रमात्वव्यापकतावच्छेदकाज्ञानप्रयुक्ततत्सं-स्कारान्यतराभावत्वाश्रयनिरूपितस्वप्रयोजकाज्ञानसमानविषयकत्वस्वपूर्वत्वो-भयसम्बन्धावच्छिन्नप्रतियोगित्वान्यतरवत्वं साध्यतया विवक्षितमिति नोक्त सिद्धसाधनावसर इति वाच्यम्;- तथा सति दृष्टान्ते साध्यवैकल्यापत्तेः ! सामान्यतोऽज्ञानतत्संस्कारान्यतरत्वाद्यवच्छिन्नाभावस्य साध्यकोटिप्रविष्टत्वेपि शुक्त्यज्ञानतत्संस्कारान्यतरत्वाद्यवच्छिन्नाभावस्य तत्राप्रविष्टत्वात्। नचोक्त विशेषाभावस्य साध्याघटकत्वेपि न क्षतिः, तादृशसामान्याभावस्यैव शुक्ति प्रमात्वव्यापकत्वात्तादृशाभावमादाय शुक्तिरूप्यादौ साध्योपपादनसम्भवात्, अज्ञानप्रयुक्तस्य घटादेस्तादृशप्रमायां स्वपूर्वत्वसम्बन्धेन सत्त्वेपि स्वप्रयो-जकाज्ञानसमानविषयकत्वसम्बन्धेनाभावेनोक्तोभयसम्बन्धावच्छिन्नाज्ञानप्रयु-क्ततत्संस्कारान्यतरत्वावच्छिन्नाभावस्य तादृशशुक्तिप्रमात्वव्यापकत्वादिति वाच्यम्;— पटुतमसंस्कारजनकतावच्छेदकशुक्तिनिष्ठविषयताके वह्न्यंशे उपेक्षात्मके समूहालम्बनप्रमारूपज्ञानेप्युक्तप्रमात्वसत्त्वेन तत्र शुक्त्यज्ञान प्रयुक्ततत्संस्कारान्यतरत्वावच्छिन्नाभावसत्त्वेप्यज्ञानप्रयुक्ततत्संस्कारान्यतर-त्वावच्छिन्नाभावविरहात् । वह्न्यज्ञानप्रयुक्तस्य वह्नावारोपितगुंजापुंजत्वादेः स्वप्रयोजकाज्ञानसमानविषयकत्व स्वपूर्वत्वोभयसम्बन्धेन तादृशसमूहालम्बन प्रमायां सत्त्वात् तादृशसामान्याभावमादाय दृष्टान्ते साध्योपपादनासम्भ

त्वात् । नच स्वप्रयोजकाज्ञानविषयतासजातीयपटुतमसंस्कारजनकतावच्छेदकविषयताकत्वमेव स्वप्रयोजकाज्ञानसमानविषयकत्वम् , तथा चोक्तसमूहालम्बनप्रमायां वह्नावारोपितगुंजापुंजत्वादेर्निरुक्तसमानविषयकत्वघटितोभयसम्बन्धनाभावादुक्तसामान्याभावमादायैव दृष्टान्ते साध्योपपादनसम्भव इति वाच्यम्;—तथा सति प्रमायां स्वजन्यपटुतमसंस्कारसाहितेत्यस्य वैयर्थ्यात्, जीवन्मुक्तप्रमायां निरुक्तसमानविषयकत्वघटितसम्बन्धद्वयेनोक्तसामान्याभावसत्त्वेनोक्तव्यभिचारानवकाशात् । तादृशविशेषणोपादानस्योक्तसम्बन्धकोटौ तन्निवेशतात्पर्यग्राहकत्वांगीकारेपि प्रातिभासिकमात्रस्याज्ञानप्रयुक्तत्वेन तन्मात्रस्य ब्रह्मज्ञानान्निवृत्तावपि जगतस्सत्वेपि प्रातिभासिकप्रतियोगिकाज्ञानप्रयुक्ततत्संस्कारान्यतरत्वावच्छिन्नाभावस्य प्रमात्वव्यापकत्वसम्बन्धेन तादृशाभावप्रतियोगित्वस्य प्रपंचे स्वीकारमात्रेणोक्तसाध्यनिर्वाहादर्थांतरम्, घटो नास्तीत्यादिप्रतीतिसिद्धाभावप्रतियोगिताया घटत्वेन प्रमेयं नास्तीति प्रतीतिविषयप्रतियोगित्वाभेदेन पटादौ तादृशप्रतियोगितावत् जगत्यपि तादृशप्रतियोगितासम्भवात् । उक्तार्थांतरवारणाय पक्षकोटावज्ञानप्रयुक्तत्वस्य निवेशे चिद्भिन्नत्वसत्तादात्म्ययोर्वैयर्थ्यम् , अज्ञानस्य तदप्रयुक्तत्वेन पक्षबहिर्भावः, पक्षस्योभयवाद्यसिद्धता च प्रसज्यते । नचोक्तार्थान्तरवारणाय तादृशप्रतियोगितावच्छेदकाज्ञानतत्संस्कारान्यतरत्वाज्ञानप्रयुक्ततत्संस्कारान्यतरत्वैतदन्यतरवत्त्वं साध्यमङ्गीकार्यमिति वाच्यम्;— एवमपि दृष्टान्ते साध्यवैकल्यस्य दुर्वारत्वात् , शुक्त्यज्ञानप्रयुक्तं हि रजतं तद्विषयकवृत्तिश्च, इयं शुक्तिरित्याधिष्ठानसाक्षात्कारानन्तरं तत्संस्काररूपरजतसूक्ष्मावस्थाया अनावश्यकत्वेपि तादृशवृत्तिसूक्ष्मावस्थारूपाज्ञानप्रयुक्तसंस्कारस्यावश्यकत्वात् । अन्यथा रजतस्मृत्यनुपपत्तेः, रजतविषयवृत्तिनाशरूपतादृशवृत्तिसूक्ष्मावस्थाया एव रजतस्मृतिहेतुसंस्काररूपत्वात् । उक्तं हि बिन्दुटीकायां– ' आवश्यकीच प्रातीतिकेप्यविद्यावृत्तिः,

तन्नाशस्यैव संस्कारत्वात। अनुमित्यादिवृत्तिनाशस्य रजताद्याकारत्वेन स्मृति हेतुतायाः क्लृप्तत्वात् , रजताद्यवच्छिन्नचैतन्यनाशस्य रजतादितादात्म्य सम्भवेपि रजतादिसम्बन्ध्याकाराण्यविषयकत्वाभावादि ' ति । नच बाधित रजतस्य स्मरणमसिद्धम् , अत्र मया रजतं भ्रान्तमासीदिति स्मरणस्या नुभवसिद्धत्वात् ; तन्नाशस्यैव संस्कारत्वादिति वदतां भवतामनुमतत्वाच्च । यदि च तद्रजतभ्रान्तेरेव स्मरणं न रजतस्येति न रजतविषयकाविद्या वृत्तिनाशरूपतत्संस्कारापेक्षेति नोक्तसाध्यवैकल्यमित्युच्यते , तदाप्यर्था न्तरम् , ब्रह्मज्ञानानन्तरं जगतः सत्त्वेपि तादृशप्रमायामुक्तोभयसम्बन्धाव च्छिन्नाभावसम्भवात् , येन सम्बन्धेन यत्र यत्सम्बध्यते तत्र तत्सम्बन्धा वच्छिन्नतदभावो वर्तत इति भवतामभ्युपगमात् । नच ब्रह्मज्ञाना नन्तरं जगतस्सत्त्वे तादृशप्रमायामुक्ताभावसम्भवेपि न तादृशप्रमात्व व्यापकतासम्भवः , तादृशाज्ञानतत्संस्कारान्यतराभावाभावरूपस्य तादृशा न्यतरस्यापि सत्त्वात् तादृशप्रमात्वसमानाधिकरणाभावाप्रतियोगित्वविरहा दिति वाच्यम् ;— तथासत्युक्ताभावे प्रमात्वव्यापकताया एव दुर्घट त्वापत्त्या साध्याप्रसिध्द्यापत्तेः, तादृशाभावस्य मिथ्यात्वेन तदभावस्य तादृशप्रमायामक्षतत्वात् ।

यत्तु मिथ्यात्वघटकाभावः पारमार्थिक इति पक्षे धूम समानाधिकरणो व्यावहारिकः प्रतियोगिव्यधिकरणो वा योभावस्तादृशा भावाप्रतियोगित्वमेव वह्न्यादौ धूमव्यापकत्वम्. मिथ्यात्वघटकाभावो व्याव हारिक इति पक्षे लोकसिद्धाभावीयविशेषणतानामन्यतमत्वेनाभावसम्बन्ध तया व्यापकताशरीरे निवेशः क्रियत इति धूमवन्निरूपिततादृशान्यतम सम्बन्धावच्छिन्नवृत्तिताकाभावाप्रतियोगित्वमेव धूमव्यापकत्वमिति सर्वत्र सर्वा भावस्वीकारेपि न व्यापकत्वादिकं दुर्वचम् , तथा च प्रकृते तादृशप्रमात्वव्यापकत्वं तादृशप्रमानिष्ठव्यावहारिकाभावाप्रतियोगित्वं

ताद्दशप्रमानिष्ठप्रतियोगिव्यधिकरणाभावाप्रतियोगित्वं ताद्दशप्रमानिरूपित लोकसिद्धविशेषणताद्यन्यतमावच्छिन्नवृत्तिमदभावाप्रतियोगित्वं वा साध्यं पर्यवसितमिति नोक्तार्थान्तरसाध्याप्रसिध्द्योरवकाश इति । तन्न, प्रतियोगि वैयधिकरण्यादिघटितव्यापकतानिवेशे उक्तरीत्या ब्रह्मज्ञानानन्तरं जगत स्सत्त्वेपि तदभावस्य व्यापकत्वसम्भवेनार्थान्तरात् । एवं प्रतियोग्यधिकरण वृत्तिभिन्नत्वस्य प्रतियोग्यधिकरणवृत्तित्वाभावस्य च समानाधिकरणप्रतीति स्थले भेदाभेदभानं सर्वत्र सर्वस्याभावं चाभ्युपगच्छतां वह्न्यादिमन्निष्ठ वह्न्याद्यभावेपि सम्भवात् व्यावहारिकत्वेनाभावस्य व्यापकत्वाघटकत्वे प्रतिवादिमते साध्याप्रसिद्धिः । लोकसिद्धविशेषणतानामन्यतमत्वादिना सम्ब न्धत्वमप्रामाणिकमेव, अन्यतमत्वघटकतद्भिन्नभेदस्य मिथ्यात्वसम्पादक विशेषणतास्वप्युक्तरीत्या सम्भवात् । किंच ब्रह्मज्ञानानन्तरं जगतस्सत्त्वेपि अ- ज्ञानतत्संस्कारान्यतराभावे ताद्दशप्रमानिष्ठाभावप्रतियोगिनि ताद्दशप्रतियो गित्वावच्छिन्नभेदाङ्गीकारमात्रेणोक्तसाध्यसिद्धिसम्भवादर्थान्तरं दुर्वारम् । अपि च जगतश्शाश्वतिकत्वेपि ब्रह्माज्ञानसमानविषयकनिर्विकल्पकज्ञाना नङ्गीकारमात्रेणोक्तसाध्यसिद्ध्या अर्थान्तरं दुर्वारम्, ताद्दशप्रमासामान्ये प्रयोजकाज्ञानसमानविषयकत्वघटितसम्बन्धद्वयावच्छिन्नाभावस्य सत्त्वेन ता- द्दशप्रमात्वव्यापकतासम्भवात् । एवं ब्रह्मज्ञानानन्तरं जगतस्सत्त्वेपि काला नवस्थानमात्रेणोक्तसाध्यसिद्ध्यार्थान्तरं दुर्वारम्, तद्दशायां कालाभावादेव स्वाश्रयकालपूर्वत्वघटितसम्बन्धद्वयावच्छिन्नोक्तान्यतराभावस्य ताद्दशप्रमा त्वव्यापकतासम्भवात् । संसारदशायां कालसम्बन्धित्वेनावस्थितस्य ब्रह्मणो मुक्तौ स्वरूपमात्रावस्थानवन्मूलप्रकृतिजीवेशभेदादिरूपस्य सर्वस्यापि प्रपञ्च स्य तथावस्थानसम्भवेन प्रपञ्चसत्यत्वाविरोधात् ।

एतेन चिद्भिन्नत्वं यत्किंचिद्विषयकप्रमात्वव्यापकस्वपूर्वत्वसम्बन्धाव- च्छिन्नाभावप्रतियोगितावच्छेदकं द्दश्यवृत्तित्वाच्छुक्तिरूप्यत्ववदित्यनुमानेन

मिथ्यात्वसिद्धिः, शुक्तिप्रमानन्तरं शुक्तिरूप्यानवस्थानवद्ब्रह्मप्रमानन्तरं प्रपञ्चानवस्थानपर्यवसानादिति निरस्तम्, उक्तार्थान्तरादेः दुर्वारत्वात् ।

यदपि ज्ञानाधीनस्वस्वीयसंस्कारोभयनाशप्रतियोगित्वमेव ज्ञान निवर्त्यत्वम् , उत्तरज्ञाननाश्यत्वमादाय पूर्वज्ञाने सिद्धसाधनात् संस्कारनिवेशः, स्मृतिनाश्यसंस्कारकत्वमादायानुभवे सिद्धसाधन वारणाय स्वेत्यस्य निवेशः; नच ब्रह्मज्ञानात्प्रपञ्चस्य नाशाभ्युपगमे "विद्वान्नामरूपाद्विमुक्त" इति श्रुतिविरोध इति वाच्यम् , चरमक्षणस्यैव स्वस्वेतरयावद्वस्तुध्वंसरूपत्वाङ्गीकारात् एकत्रापि रूपभेदेन ध्वंसं प्रति प्रतियोगित्वानुयोगित्वयोस्सम्भवात् ; सकलदृश्यत्वेन हि तत्र प्रतियोगित्वं चरमतत्वज्ञानाश्रयतत्क्षणव्यक्तित्वेन चानुयोगित्वम् ; घटाभावे सम्बन्धान्तरेण स नास्तीत्यादिप्रत्ययबलेन घटाभावादिप्रतियोगिकात्यन्ताभावस्यैव ज्ञानात्सर्वं दृश्यं नष्टमित्यादिप्रत्ययबलेन सर्वदृश्यप्रतियोगिकस्य चरमक्षणानुयोगिकस्य ध्वंसस्य सम्भवात् ; मुद्गरपातादिना घटस्य नाशेपि तत्संस्कारस्यानाशादुभयप्रतियोगिकनाशस्य ब्रह्मज्ञानमात्रप्रयुक्तत्वान्नातीत घटादौ बाध इति । तन्न, अपेक्षाबुद्ध्यात्मकानुभवानन्तरजातसंस्कारेण स्मृत्युत्पत्तौ तादृशस्मृत्यानुभवसंस्कारोभयनाशात्तादृशानुभवे सिद्धसाधनात् ।

नच स्वस्वकारणान्यतरत्वव्यापकप्रतियोगिताकनाशे ज्ञानजन्यत्व निवेशात् नोक्तसिद्धसाधनम् , तत्र संस्कारकारणानुभवप्रतियोगिकनाशस्य उत्तरज्ञानजन्यत्वेपि तादृशनाशस्य स्वकारणसामान्यप्रतियोगिकत्वाभावा दिति वाच्यम् ,– तथासति स्वेत्यस्य वैयर्थ्यापत्तेः । एवं नाशस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्वीकारेण साध्याप्रसिद्ध्यभावेपि पूर्वोक्त रीत्या दृष्टान्ते साध्यवैकल्यस्य दुर्वारत्वात । रजतज्ञानकारणपरम्परान्तर्गतस्य रजतसंस्कारस्य शुक्तिज्ञानेनानाशात , अन्यथा रजतस्मृत्यनुपपत्तेः । ध्वंसस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वमङ्गीकुर्वाणैरप्येकविशेषाधि

करणसमये तादृशध्वंसानभ्युपगमात् । एवं ज्ञानादृदृश्यमात्रस्य केनचि द्रूपेण नाशे रूपान्तरेणावस्थाने ऽप्युक्तसाध्यनिर्वाहादर्थान्तरं दुर्वारम् । घटो दण्डाभिघातेन नष्ट इति प्रतीत्या घटत्वावस्थाविशिष्टस्य नाशेपि कपालत्वावस्थाविशिष्टस्यावस्थानदर्शनात् ।

नच तत्र घटत्वावस्थाया एव नाशो नतु तदवस्थाविशिष्टद्रव्य स्येति वाच्यम् ;— घटो नष्ट इति प्रतीत्या विशिष्टे प्रतियोगितापर्याप्त्यव गाहनात् ; सत्यत्ववादिभिर्विशेषणनाशस्य विशिष्टप्रतियोगिकत्वानङ्गीका रेपि तथाङ्गीकारमादायार्थान्तरस्य दुर्वारत्वाच्च ।

किंच स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वरूपसाध्यस्य प्रति योग्यभावयोरविरोधित्वमादाय पर्यवसानवद्ध्वंसप्रतियोगिनोरविरोधित्वमा दायोक्तसाध्यपर्यवसानप्रसङ्गेनार्थान्तरं दुर्वारम् । तथांगीकारे ज्ञानादृदृश्य नाशेपि दृश्यावस्थानसम्भवात् । नच स्वप्रतियोगिकध्वंसाधिकरणक्षणा वृत्तित्वस्य पक्षविशेषणत्वान्नार्थान्तरमिति वाच्यम् , तथासति चरमक्षणस्य पक्षबहिर्भावप्रसङ्गात् ; तस्य स्वात्मकस्वप्रतियोगिकध्वंसाधिकरणक्षणवृत्ति त्वात् । मृदादीनामपि स्वप्रतियोगिको यो घटत्वावस्थाविशिष्टध्वंसस्तदधि करणक्षणवृत्तित्वेन दृश्यसामान्ये तादृशविशेषणाभावेमाश्रयासिद्धेश्च । एवं चरमक्षणस्य स्वध्वंसरूपत्वकथनमप्यनुचितम् , प्रतियोगिध्वंसयोर्विरोधस्य सर्वानुभवसिद्धतया विरुद्धयोश्चात्यन्तभेदस्यावश्यकतया तदभेदस्या सम्भावितत्वात् । प्रतियोगितानुयोगितावच्छेदकभेदमात्रस्य स्वाश्रययोर- विरोधं प्रत्यनुपपादकतया तद्भेदोपपादनस्याकिंचित्करत्वात् ।

नच प्रतियोगिध्वंसयोर्विरोध एव नास्तीति शंक्यम् , यदा यस्य ध्वंसस्तदा न स इति कालिकसम्बन्धघटितस्य सर्वानुभवसिद्धस्य विरोधस्य दुरपह्नवत्वात् । अन्यथा तद्घटो नष्ट इति जानतोपि घटादि सद्भावसन्देहस्य कदाचिद्घटाद्यर्थप्रवृत्तेश्च प्रसङ्गात् । दृश्यसामान्यध्वंस

स्यापि द्दश्याविरोधितया ध्वंसानन्तरमपि द्दश्यावस्थानप्रसक्त्या ध्वंसोत्पादस्य निवृत्तिपर्यवसायित्वाभावप्रसङ्गाच्च । नच ध्वंसोत्पादद्वितीयक्षणे प्रतियोग्यवस्थानानभ्युपगमात्तन्निवृत्तिः पर्यवस्यतीति वाच्यम् , प्रथमक्षणे सहावस्थितस्य द्वितीयक्षणे सहावस्थाने बाधकाभावात् । नहि प्रथमक्षणे ध्वंसेन साकं प्रतियोगी कुत्रापि प्रतीतः, येन द्वितीयादिक्षण एव विरोध इति कल्प्येत । यदि च प्रमाणलेशं विनापि प्रथमक्षणे न विरोधः किन्तु द्वितीयादिक्षण इति कल्प्येत तदा द्वितीयक्षणेऽपि न विरोधः किन्तु तृतीयक्षणे तृतीयक्षणेऽपि न विरोधः किन्तु चतुर्थ इत्यादिनिबन्धप्रलपनमप्यवारणीयं स्यात् ।

नच प्रागभावस्य प्रतियोगिनाश्यतया प्रतियोग्युत्पत्तिक्षणे प्रागभावस्यावस्थानमावश्यकमित्याद्यक्षणमात्रे प्रतियोगिप्रागभावयोरविरोधस्य दृष्टत्वात् तद्वदेव ध्वंसप्रतियोगिनोरप्येकस्मिन्नेव क्षणेऽविरोधः कल्प्यते, क्षणद्वयादिपर्यन्तं सहावस्थानं तु कुत्राप्यदृष्टत्वान्न कल्प्यत इति वाच्यम् ; प्रागभावध्वंसं प्रति प्रतियोगिनः कारणतापक्षे प्रतियोगिप्रागभावयोस्साक्षाद्विरोधस्यैवाकल्पनीयत्वात् , द्वितीयक्षणे ध्वंसोत्पादेनैव तत्क्षणप्रभृति प्रतियोगिनोप्यर्थतोविरोधस्य सिद्धत्वात् । प्रागभावो ह्येकस्मिन्नधिकरणे कार्योत्पादानन्तरं पुनः पूर्वसिद्धया सामग्र्या कार्योत्पादवारणार्थं प्रतियोगिजनकत्वे सति प्रतियोगिनाश्यतया कल्प्यते, नतु ध्वंस इव प्रतियोगिविरुद्धतया सर्वानुभवसिद्धः । वस्तुतस्तु प्रागभावेन साकमपि प्रतियोगिन एकक्षणावस्थानं नास्त्येव, प्रतियोगिन एव प्रागभावनाशरूपतया प्रतियोगिसामग्र्या एव तज्जनकत्वात् । भावाभावयोरैक्यानभ्युपगमेपि प्रतियोग्यतिरिक्तध्वंसं प्रत्यपि तत्सामग्र्या एव जनकत्वात् । तस्माद्यत्र कालविशेषावच्छिन्नविशेषणतासम्बन्धेन तदीयध्वंसवत्त्वं तत्र कालिकसम्बन्धेन तच्छून्यत्वं तद्वद्भेद इति नियमस्य यत्र तत्कालावच्छिन्न

विशेषणतासम्बन्धेन तदीयध्वंसवत्त्वं तत्र तत्कालावच्छिन्नविशेषणतासम्ब न्धेन तच्छून्यत्वं तद्वद्भेदश्चेति नियमस्य च दुरपह्नवतया स्वस्यैव स्वध्वंसत्वमसम्भवदुक्तिकमेव ।

नच यत्र ध्वंसप्रतियोगित्वं तत्र ध्वंसाधिकरणक्षणोत्तरक्षणवृत्तित्वा भाव इत्येव नियमः स्वीकर्तव्य इति स्वस्यापि स्वध्वंसत्वसम्भव इति वाच्यम् ; इदानीं घटध्वंसो जात इति प्रतीतिमत इदानीं घटोऽस्तीति प्रतीतेरनुभवविरुद्धतया प्रतियोगितद्ध्वंसयोरुत्पत्तिक्षण एव विरोधस्या वश्यकत्वात् ।

नच ध्वंसोत्पत्तिक्षणे प्रतियोगिनोऽवस्थानानभ्युपगमे ध्वंसस्यो त्पत्तिरेव दुर्लभा, कार्यतावच्छेदकसम्बन्धेन कार्याधिकरणदेशावच्छेदेन का र्यस्य य आद्यक्षणसम्बन्धः तस्यैवोत्पत्तिरूपत्वात् ; उत्पत्तिक्षणे प्रतियोगिता सम्बन्धेन ध्वंसाधिकरणस्य प्रतियोगिनोऽनवस्थाने उत्पत्तिक्षणनिष्ठकार्य सम्बन्धे तस्यावच्छेदकत्वासम्भवात् ; अवच्छेद्याधिकरणसम्बन्धिन एवाव च्छेदकत्वादिति वाच्यम् ;— वृत्तिनियामकसम्बन्धरूपो यः कार्यतावच्छेदक सम्बन्धस्तेन सम्बन्धेन यत्कार्याधिकरणं तदवच्छिन्नाद्यक्षणसम्बन्धस्यैवोत्प- त्तिरूपत्वात् ; कालिकदिक्कृतविशेषणताभ्यां कार्यसामान्यं प्रति कालदिशो स्तादात्म्येन कारणतया तादृशसम्बन्धेन कार्याधिकरणकालदिगादिरूपदेशा वच्छिन्नाद्यक्षणसम्बन्धमादायोत्पत्तिनिर्वाहात् । एवं ध्वंसाधिकरणक्षणे प्रति योगिनोवस्थानाभ्युपगमे "उत्तरोत्पादे च पूर्वनिरोधा" दिति सूत्रभाष्य विरोधः, बौद्धमतनिराकरणपरे तत्सूत्रे उत्तरक्षणोत्पत्तिसमये पूर्वक्षणस्य नाशेनानवस्थानादुत्तरक्षणं प्रति पूर्वक्षणस्य समवायिकारणत्वं न सम्भवति, कार्यसहभूतस्यैव समवायिकारणत्वादिति व्युत्पादनात् । यदितु ध्वंससमयेपि प्रतियोगिनोवस्थानं स्यात्तदा प्रथमक्षणस्य द्वितीयक्षणे ध्वंसोत्पादेप्यवस्थानसम्भवेन द्वितीयक्षणरूपकार्यारम्भस्यापि नानुपपत्तिरि त्युक्तसूत्रभाष्यविरोधः स्पष्टः ।

किंच "अथ यदल्पं तन्मर्त्यमन्यराजानस्ते ऽक्षय्यलोका भवन्ती" त्यादि श्रुतिभिः ध्वंसप्रतियोगिफलस्य निन्दितत्वात् मोक्षस्यापुरुषार्थत्व प्रसङ्गः, चरमक्षणरूपाविद्यानिवृत्तेरेव मोक्षत्वेन तस्यापि ध्वंसप्रतियोगित्वात् , "अविद्यास्तमयो मोक्षस्सा च बन्ध उदाहृत" इति वार्तिकेन निरुक्ताविद्यानिवृत्तेरेव मोक्षत्वप्रतिपादनात् । उक्ताविद्यानिवृत्त्युपलक्षितात्मस्वरूपस्य मोक्षत्वं च निराकरिष्यते ।

यदपि स्वसमानविषयकत्व- कालिकविशेषणत्वोभयसम्बन्धावच्छिन्न प्रतियोगिताको योऽज्ञानतत्संस्कारान्यतरस्याभावः यश्च स्वप्रयोजकाज्ञान समानविषयकत्व स्वपूर्वत्वोभयसम्बन्धावच्छिन्नाज्ञानप्रयुक्ततत्संस्कारान्यतराभावो ज्ञानाधीनः तत्प्रतियोगित्वमेव ज्ञाननिवर्त्यत्वम् , पूर्वमते नाशस्येवै तन्मते अत्यन्ताभावस्य ज्ञानसमानकालीनस्यापि ज्ञानाधीनत्वम् , तत्व ज्ञानादज्ञानप्रयुक्तमुच्छिद्यते सर्वदृश्यमुच्छिद्यत इति प्रत्ययात् ; ननूक्तात्यन्ताभावस्याविद्यकत्वेन तस्याप्युक्तात्यन्ताभावो ज्ञानाधीनो वाच्यः एवं तस्यापीत्यनवस्थेति चेन्न,- पूर्वमते एकस्यैव स्वस्वेतरनाशत्ववदेतन्मते प्येकस्यैव स्वस्वेतरोक्तात्यन्ताभावत्वस्यापि सम्भवादिति । तदपिन , घटादेर्ज्ञाने स्वसमानविषयकत्वाद्यभावेन तादृशसम्बन्धद्वयावच्छिन्नाज्ञान तत्संस्कारान्यतराभावस्याज्ञानप्रयुक्ततत्संस्कारान्यतराभावस्य च सत्त्वेन तादृशाभावस्य भगवत्सङ्कल्पादिप्रयुक्तत्वेन ब्रह्मज्ञानानन्तरं जगतस्सत्त्वेपि निरुक्तज्ञाननिवर्त्यत्वसम्भवेनार्थान्तरस्य दुर्वारत्वात् । घटादिनिष्ठतादृशाभावस्य ज्ञानाधीनत्वसिद्धिमादायार्थान्तराच्च । नच ज्ञाननिष्ठो ज्ञानाधीनश्च यस्तादृशाभावः तत्प्रतियोगित्वविवक्षणान्नोक्तार्थान्तरमिति वाच्यम्;—ज्ञानाधीनो ज्ञाननिष्ठः कालिकसम्बन्धेनाज्ञानतत्संस्कारान्यतरस्य स्वाश्रय कालपूर्वत्वसम्बन्धेनाज्ञानप्रयुक्ततत्संस्कारान्यतरस्य चाभावस्तत्प्रतियोगित्वस्यैव ज्ञाननिवर्त्यत्वरूपतासम्भवेन ज्ञानाधीनत्वविवक्षायां सम्बन्धद्वयनिवेशनस्य वैयर्थ्यात् । तावन्मात्रविवक्षायामप्यसन्निष्ठतादृशाभावस्य ज्ञानाधी

नत्वसिद्धिमादायार्थान्तरस्य दुर्वारत्वात् । एवं घटादेरज्ञानप्रयुक्तत्वानभ्युप गमे स्वप्रयोजकाज्ञानसमानविषयकत्वघटितसम्बन्धद्वयावच्छिन्नाभावस्य केव लान्वयिनो ज्ञानाधीनत्वसिद्धिमादायार्थान्तरं दुर्वारम्; व्यधिकरणसम्बन्धा वच्छिन्नत्वानिवेशेपि व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगितायामेव तदनव च्छिन्नत्वसिद्धिमादायार्थान्तरमिति ।

एतेन ज्ञानाधीनो यः स्वतादात्म्यापन्नवस्तुसामान्यस्याभावस्त त्प्रतियोगित्वं ज्ञाननिवर्त्यत्वम् , स्वात्मकं च स्वसमानसत्ताकं ग्राह्यम् , तच्च स्वीयसंस्कारस्वीयपरिणामादिरूपमेव, ज्ञानेन ह्यज्ञानतत्पारिणामसामान्यस्या त्यन्ताभावः स्वोत्पत्तिद्वितीयक्षणावच्छिन्नस्साध्यते, साध्यता च तत्र क्षेम साधारणी, स चाभावः स्वान्यसर्वदृश्यविरोधी क्षणिकः, इति चतुर्थकल्पोपि निरस्तः; ब्रह्मणि तादात्म्यसम्बन्धेन जगतस्सत्त्वेपि तत्सम्बन्धावच्छिन्नाभा- वस्य शशशृङ्गादिनिष्ठस्य ज्ञानाधीनत्वमात्रेणोक्तसाध्यासिद्धिसम्भवेनार्थान्त- रात् । घटत्वपटत्वाभ्यां दृश्यसामान्याभावस्य दृश्याविरोधिनो ज्ञानाधीनत्व मादायार्थान्तराच्च । व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वानिवेशेपि व्यधि करणधर्मावच्छिन्नप्रतियोगितायामेव व्यधिकरणधर्मानवच्छिन्नत्वसिद्धिमादाया र्थान्तरात् । ब्रह्मणि तादात्म्यसम्बन्धेन दृश्याधिकरणे तत्सम्बन्धावच्छिन्न तदभावस्य त्वन्मते अनादित्वेन तस्य ज्ञानाधीनत्वासम्भवेन साध्या प्रसिद्धेश्च ।

नच ज्ञाननिवर्त्यत्वं मिथ्यात्वमिति पक्षे तेन सम्बन्धेन तदधिकरणे तत्सम्बन्धावच्छिन्नतदभावानभ्युपगमेपि मिथ्यात्वसिद्ध्या ब्रह्मणि तादात्म्य सम्बन्धावच्छिन्नदृश्यसामान्याभावो न स्वीकर्तव्य इति वाच्यम्; रजत मत्र नास्ति नासीन्न भविष्यतीत्यादिबाधबुद्धीनां त्वदभिमतव्यावहारिक प्रमात्वानुरोधेन "नेह नानास्ति किंचन" "एकमेवाद्वितीय" मित्यादिश्रुत्यनु रोधेन च तदधिकरणे तदभावस्यावश्यमङ्गीकार्यत्वात् ।

नच पारमार्थिकाभाव एवोक्तश्रुत्यादिसिद्धः, व्यावहारिकाभावश्च ज्ञानसाध्य इति न दोष इति वाच्यम्;–तथासत्यत्यन्ताभावत्वस्य पारिभाषिकत्वापत्तेः जन्याभावस्य ध्वंसरूपताया एव युक्तत्वात् । न चायं सामयिकाभावः, अधिकरणान्तरस्य प्रतियोगिमत्तादशायामेव तदभ्युपगमात् । नहि तस्मिन्नेवाधिकरणे स्थितस्य प्रतियोगिनोऽधिकरणान्तरसम्बन्धं बिना निवृत्तौ सत्यां सामयिकाभावः केनाप्यभ्युपगम्यते । नच नित्यसंसर्गाभावत्वमत्यन्ताभावत्वमिति न सम्भवति, मन्मते ब्रह्मभिन्नसामान्यस्यैवानित्यत्वेन व्यावहारिकात्यन्ताभावेऽव्याप्तेः, घटस्य घटाभावात्यन्ताभावत्वानुपपत्तेश्च, किन्तु नास्तीति प्रतीतिसाक्षिकोऽनुयोगिताविशेषः, तथाच तादृशात्यन्ताभावत्वं ज्ञानजन्यस्यापि सम्भवतीति ज्ञानजन्यध्वंसप्रतियोगित्वरूपपूर्वकल्पाद्वैलक्षण्यमिति वाच्यम्, तथासति स्वोत्पत्तिद्वितीयक्षणावच्छिन्नस्य क्षेमसाधारणसाध्यत्वसमर्थनविरोधात्, घटादिवज्जन्यत्वस्यैव सम्भवात् । नच दृश्यसामान्याभावस्यानादित्वेपि तस्य स्वद्वितीयक्षणसम्बन्धित्वविशिष्टस्य ज्ञानसाध्यत्वं सम्भवतीति वाच्यम्; ज्ञानपूर्वक्षणसम्बन्धस्य ज्ञानोत्पत्तिक्षणसम्बन्धस्येव च ज्ञानद्वितीयक्षणसम्बन्धस्यापि ज्ञानं विनैव सम्भवात् । नच श्रुत्यादिबलात् पूर्वमवस्थितस्याप्यभावस्य तत्वज्ञानसाध्यत्वमङ्गीक्रियत इति वाच्यम्;– उक्तरीत्या ऽनुपपन्नेर्थे श्रुतेस्तात्पर्यासम्भवात् । नचानादिसिद्धस्यापि दृश्यसामान्याभावस्य लोकसिद्धविशेषणतया ब्रह्मवृत्तित्वं ज्ञानोत्पत्तिद्वितीयक्षणावच्छेदेनेति तादृशवृत्तित्वविशिष्टस्य साध्यतासम्भवः, तादृशविशेषणता च तादृशाभावस्य प्रतियोग्यनवच्छेदककालावच्छेदेनैव ब्रह्मणि न पूर्वम्, यथा नैयायिकमते नित्यस्यापि तदधिकरणे पूर्वमवस्थितस्यापि घटाद्यभावस्य प्रतियोग्यनधिकरणकालावच्छेदेनैव तादृशविशेषणतया वृत्तित्वं कारणाभावप्रयोज्यमिति वाच्यम्;– दृश्यसामान्यप्रतियोगिके तादृशाभावे स्वप्रतियोगित्वस्याप्यक्षततया तादृशाभावाधिकरणीभूतज्ञानोत्पत्तिद्विती-

क्षणावच्छेदेन तादृशाभावस्य उक्तविशेषणतया वृत्तित्वासम्भवात्, प्रतियोगिसामान्यानधिकरणकालावच्छेदेनैव तादृशविशेषणतया वृत्तित्वाङ्गीकारात् । अन्यथा स्वान्यप्रतियोगिनामपि ज्ञानोत्पत्तिद्वितीयक्षणे वृत्तित्वापातेन ब्रह्मज्ञानानन्तरं जगतोनुवृत्तिप्रसंगात् । अत एव स्वान्यसर्वदृश्य विरोधप्रतिपादनमप्ययुक्तम्, अभावस्य प्रतियोगिमध्ये केनचित्साकमविरोधः केनचित्साकं विरोध इत्यस्य काप्यदर्शनात् । प्रतियोगितावच्छेदक रूपाक्रान्तत्वस्यैव विरोधप्रयोजकत्वात् । अन्यथा सामान्याभावनिश्चयेऽप्य विरुद्धप्रतियोगिविशेषसम्भावनया सर्वत्र प्रतियोगिसत्ताबुद्धेरनिवृत्तिप्रसंगात्। नच तादृशाभावस्य स्वान्यदृश्यसामान्यप्रतियोगिकत्वमेव न स्वप्रतियोगिकत्वमपीति नोक्तदोष इति वाच्यम्,—तथा सति तादृशाभावस्याभावान्तराभ्युपगमेऽनवस्थानात्, तदनभ्युपगमे तत्रैव बाधस्य दृश्यत्वहेतोर्व्यभिचारस्य च प्रसंगात् ।

यदपि स चाभावः क्षणिक इत्युक्तम्; तत्र क्षणिकत्वं नाम किं द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वम्, किंवा स्ववृत्तित्व- स्वाभिन्नक्षणवृत्तित्वोभय सम्बन्धेन क्षणविशिष्टान्यत्वरूपं क्षणद्वयावृत्तित्वं विवक्षितम्? नाद्यः, तस्य ध्वंसाभ्युपगमे पुनस्तस्यापि ध्वंस इत्यनवस्थानात् । तद्ध्वंसस्य ध्वंसान्तरं विना नित्यतयाऽवस्थाने सत्यत्वप्रसंगात् । अज्ञानादेरेव तादृशध्वंसाभ्युपगमसम्भवेन मध्ये अभावान्तरकल्पनवैयर्थ्याच्च । नापि द्वितीयः, अनादिसिद्धे तस्मिन् क्षणद्वयवृत्तित्वस्याप्यावश्यकत्वात् । तत्वज्ञानानन्तरं क्षणद्वय वृत्तित्वाभावविवक्षापि न युज्यते, तदनन्तरं क्षणद्वयवृत्तित्वरूपप्रतियोगिन एवाप्रसिद्ध्या ऽभावाप्रसिद्धेः ।

नच स्वाधिकरणक्षणपूर्वत्वाभाववत्स्वाधिकरणीभूततत्वज्ञानोत्पत्ति द्वितीयक्षणकत्वमेव क्षणिकत्वमिति वाच्यम्;—तत्वज्ञानानन्तरं क्षणाभावेनैव निरुक्तक्षणिकत्वसम्भवेन उक्तक्षणिकत्वस्य तादृशाभावाननुवृत्तिपर्यवसायित्वा

भावात् । कालाभावप्रयुक्तक्षणद्वयावृत्तित्वस्य क्षणिकत्वरूपतया तादृशाभाव-स्यानन्नुवृत्त्यभ्युपगमे तद्वदेव ब्रह्मणोपि ज्ञानानन्तरमननुवृत्तिप्रसङ्गात् ।

किंच ब्रह्मज्ञानोत्पत्तितृतीयक्षणावृत्तित्वपर्यवसायिनिरुक्तक्षणिकत्व मुक्ताभावस्य किं प्रयुक्तम्? तत्वज्ञानप्रयुक्तमिति चेन्न;- निरुक्तक्षणिकत्वस्य तत्वज्ञानप्रयोज्यतासाधकप्रमाणाभावात । नच तत्वज्ञानप्रयोज्यतावच्छेदक निरुक्तक्षणिकत्वविशिष्टाभावप्रतियोगित्वस्यैव साध्यत्वांगीकारेण उक्तानुमा-नेनैव तादृशाभावस्य क्षणिकत्वं सिद्ध्यतीति वाच्यम् ;- तथासति शुक्ति रूप्याभावे ज्ञानप्रयोज्यतावच्छेदकनिरुक्तक्षणिकत्वाभावेन दृष्टान्ते साध्य वैकल्यस्य दृश्यत्वहेतोस्तत्र व्यभिचारस्य च दुर्वारत्वात् । नच साध्यकोटौ क्षणिकत्वं न निवेश्यते, किन्तु ब्रह्मज्ञानतृतीयक्षणानिष्ठाभावप्रतियोगित्वमेव पक्षतावच्छेदककोटौ निवेश्यते, तथाच तादृशाभावे निरुक्तक्षणिकत्वं सिद्ध्य तीति नोक्तदोषद्वयमिति वाच्यम्;— तथासत्याश्रयासिद्ध्यापत्तेः, तादृश ज्ञानतृतीयक्षणादेरप्रसिद्धेः । नच स्वाधिकरणक्षणपूर्वत्वाभाववद्ब्रह्मज्ञानो त्पत्तिद्वितीयक्षणकत्वस्याभावविशेषणत्वान्नोक्तदोषः, शुक्तिरूप्याभावस्या प्युक्तविशेषणाक्रान्तत्वादिति वाच्यम्;- तथा सति स्वाधिकरणक्षणपूर्वत्वा भाववत्तत्वज्ञानाधिकरणक्षणकत्वस्यैव ज्ञाननिवर्त्यत्वरूपत्वसम्भवेन शेष वैयर्थ्यात् । तत्वज्ञानानन्तरद्वितीयक्षणस्य तत्र निरुक्तक्षणिकत्वविशिष्टदृश्य सामान्याभावस्य च कल्पनाया वैयर्थ्याच्च ।

यदपि स्वाधिकरणकालपूर्वत्वशून्यज्ञानाधिकरणकालकत्वमेव ज्ञानो-च्छेद्यत्वरूपं ज्ञाननिवर्त्यत्वम्, स्वपदं च यत्र ज्ञाननिवर्त्यत्वं साध्यते तत्प रम्, दृश्याधिकरणक्षणे दृश्याधिकरणक्षणपूर्वत्वानाधिकरणत्वं हि दृश्यो च्छेदः, शास्त्रीयचरमतत्वज्ञानोत्पत्तिक्षणे च दृश्याधिकरणक्षणपूर्वत्वं नास्ति, तदुत्तरं क्षणस्याप्रसिद्धत्वात्, तत्पूर्वक्षणपूर्वत्वस्य क्षणान्तरे प्रसिद्धस्यापि तत्रासम्भवात् ; नतु नैयायिकादिवद्ध्वंस एव दृश्योच्छेदः, तस्य सत्यत्वे अद्वैतश्रुतिविरोधात् ; मिथ्यात्वे च चरममनोवृत्त्यनन्तरं उत्पन्नस्य तस्य

समुच्छेदकाभावेनोच्छेदाभावात् "विद्वान्नामरूपाद्विमुक्त" इति श्रुतिविरोधापत्तेः; नचोक्तध्वंसस्य सत्यत्वेपि श्रुतेर्नविरोधः, तया भावाद्वैतबोधनादिति वाच्यम् ,- असंकुचिताद्वैतस्य श्रुत्यर्थतया प्रतीयमानत्वादिति । तन्न; विशिष्टाद्वैतसिद्धान्तेपि सर्वमुक्तिदशायां जडप्रकृतेरीश्वरात् परस्परं च भिन्नानामनन्तकोटिजीवानां तदीयगुणानां च अवस्थानेपि कालतत्वस्य क्षणात्मना तत्तत्कार्यानुगुणपरिणामहेतुभूतकर्मविशेषाभावात् प्रकृत्यादेरिव स्वरूपेणावस्थित्या प्रकृत्यादौ सर्वत्र स्वाश्रयकालपूर्वत्वाभाववज्ज्ञानाधिकरणकालकत्वस्य सत्वात् , तदानीं जन्यकालानभ्युपगमात् - महाकालमात्रसम्बन्धितयावस्थानेपि तस्यानादितया तदवधिकपूर्वत्वस्य क्वापि वक्तुमशक्यत्वात् , निरुक्तज्ञाननिवर्त्यत्वस्य सिद्धान्तिनः प्रति साधने सिद्धसाधनस्य दुर्वारत्वात् । अतएव " सकृद्दिवा हैवास्य भवती " ति मुक्तं प्रति प्रकाशैकमयस्य भाविनस्सर्वस्यापि कालस्यैकदिनरूपत्वं श्रूयते । मास्तुवा सिद्धसाधनम्,निरुक्तरूपोच्छेदस्य सर्वस्यापि स्वरूपानिवृत्तिं विनैव सम्भवादर्थान्तरस्य दुर्वारत्वात् । स्वत्वस्याननुगतत्वेन साध्यस्य पक्षदृष्टान्तसाधारण्यासम्भवाच्च । नच स्वाधिकरणक्षणोत्तरक्षणावृत्तित्व स्वाधिकरणक्षणवृत्तित्वोभयसम्बन्धेन तत्वज्ञानविशिष्टत्वमेव ज्ञाननिवर्त्यत्वमिति नाननुगमः, द्वितीयसम्बन्धनिवेशाच्च नासत्यमादायार्थान्तरमिति वाच्यम्;–तथासति बाधापत्तेः, ब्रह्मज्ञानोत्तरक्षणस्याप्रसिद्धत्वेन स्वाधिकरणक्षणोत्तरक्षणावृत्तित्व घटितोभयसम्बन्धेन ब्रह्मज्ञानविशिष्टत्वस्य प्रपञ्चेऽसम्भवात् । नच स्वाधिकरणक्षणोत्तरक्षणवृत्तित्वसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभाववत्त्व स्वाधिकरणक्षणवृत्तित्वोभयसम्बन्धेन तत्वज्ञानविशिष्टत्वस्य साध्यत्वान्न बाधः, ब्रह्मज्ञानोत्तरक्षणस्याप्रसिद्धत्वेपि उक्तसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभावस्य व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकस्य प्रसिद्धिसम्भवादिति वाच्यम् ,- एवं सति घटनाशाधिकरणक्षणवृत्तितत्वज्ञानमादाय घटादौ सिद्धसाधनापत्तेः । नच स्वाधिकरणक्षणोत्तरक्षणवृत्तिवस्तुविशिष्टत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रति

योगिताकाभाववत्त्व- स्वाधिकरणक्षणवृत्तित्वोभयसम्बन्धेन तत्वज्ञानविशिष्टस्व स्य साध्यत्वाङ्गीकारान्नोक्तासिद्धसाधनम् , वस्तुविशिष्टत्वं च स्वतादात्म्या पन्नत्व- स्वसमानसत्ताकत्वोभयसम्बन्धेन, घटतादात्म्यापन्नस्य घटसमानसत्ता कस्य वस्तुनस्तत्प्रयोजकाज्ञानादेर्मुक्तिपर्यन्तं सत्त्वाद्धटनाशाधिकरणक्षण वृत्तितत्वज्ञानस्योक्तोभयसम्बन्धेनाभावादिति वाच्यम् ;— एवमपि ब्रह्म ज्ञानानन्तरक्षणाप्रसिद्ध्या उक्तोभयसम्बन्धेन तत्वज्ञानविशिष्टत्वस्य ब्रह्मणि सत्त्वे यथा न मिथ्यात्वं तद्वदेव जगतोपि सत्यत्वापत्त्या अर्थान्तरस्य दुर्वारत्वात् । एवं स्वोत्तरक्षणवृत्तित्वसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिता काभाववत्त्व- स्ववृत्तित्वोभयसम्बन्धेन क्षणविशिष्टत्वस्यैव नशधात्वर्थत्वे ब्रह्म ज्ञानानन्तरं दृश्यं नश्यतीतिवद्ब्रह्म नश्यतीति व्यवहारापत्तेश्च । नच शुद्धचितः कालसम्बन्धित्वानभ्युपगमान्नोक्तदोषद्वयावकाश इति वाच्यम् ;— ब्रह्मणः कालासम्बन्धित्वे ब्रह्मणस्तुच्छत्वस्य “ सदेव सोम्येदमग्र आसी ” दित्यादि श्रुतीनामप्रामाण्यस्य च प्रसङ्गात् ।

ननु ‘ सदेवे ’ त्यादिवाक्यमुपहितपरम् , नशुद्धपरम् , निर्विशे षस्याधिकरणाप्रसिद्धेः, “ स्वे महिम्नी ” ति श्रुत्या तस्याधिकरणनिषे धात् ; ब्रह्मणः कालासम्बन्धित्वे तुच्छत्वापत्तिरित्यपि न युक्तम् , नहि क्षण सम्बन्धाधीनं कस्यचित्सत्त्वम् , प्रतिक्षणं पूर्वपूर्वक्षणसम्बन्धध्वंसेन जगतः क्षणिकत्वापत्तेः, आकाशेश्वरादीनामनित्यत्वापत्तेश्च; न्यायनयेपि नित्याना म्महाकालवृत्तित्वानभ्युपगमेन असत्त्वापत्तेः, आत्माश्रयदोषेण महाकालस्य महाकालवृत्तित्वासम्भवेन महाकालस्यैवासत्त्वापत्तौ तत्सम्बन्धाधीनस्य जगतस्सत्त्वस्य सुतरामसम्भवेनं शून्यवादपर्यवसानाच्चेति । तन्न, शुद्ध ब्रह्मणः कालसम्बन्धानभ्युपगमस्साधकाभावाद्वा बाधकसद्भावाद्वा ? नाद्यः, ‘ सदेवे ’ त्यादिश्रुतेरेव साधकत्वात् । अद्वितीयमित्युक्त्या तस्याश्शुद्धविष यकत्वस्यैव स्वारसिकत्वात् । विवरणकारादिभिश्शुद्धस्यापि कल्पितधर्मवत्ताया ज्ञानविषयकत्वस्य च स्वीकृतत्वात् । व्यधिकरणधर्मावच्छिन्नाभावाभ्युप

गमे पारमार्थिकत्वेन विशेषाभाववत्त्वस्य स्वसमानसत्ताकत्व- स्वाश्रयत्वोभय सम्बन्धावच्छिन्नविशेषसामान्याभाववत्त्वरूपस्य वा निर्विशेषत्वस्य कालसम्ब न्धित्वाविघातकत्वात् । न द्वितीयः, " स्वे महिम्नी " त्यादि श्रुतेर्घटादिव दन्यप्रयोज्यस्थितिनिषेधपरत्वेन सङ्गस्य कल्पिततया असङ्गत्वादिश्रुतेश्च विरोधाभावात् । सत्त्वस्य क्षणसम्बन्धव्याप्यत्वस्वीकारेपि क्षणसम्बन्धाधीन त्वास्वीकारेण जगतः क्षणिकत्वापत्तेरयोगात् । नैयायिकनये नित्यानामपि कालवृत्तित्वं स्वीकृतमेव । अतएव दीधितिकृता नित्यानाम्महाकालावृत्तित्व पक्षे(स्वरसमुद्भाव्य तेषां कालवृत्तित्वपक्षे प्रतियोग्यनधिकरणहेत्वधिकरण वृत्त्यभावप्रतियोगितासामान्ये यद्धर्मावच्छिन्नत्व- यत्सम्बन्धावच्छिन्नत्वो भयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति ल- क्षणान्तरमुक्तं सिद्धान्तलक्षणे । अन्यथा तेषां कालवृत्तित्वघटितकारणत्वा नुपपत्तेः । महाकालस्य स्ववृत्तित्वे आत्माश्रय इत्यपि न युक्तम् , प्रमेयत्वं प्रमेयं घटाभावे घटो नास्तीत्यादिवत् कालस्सदास्तीति प्रतीत्या कालस्यापि कालवृत्तित्वसम्भवात् ।

यदुक्तं नैयायिकादिमत इवास्मत्सिद्धान्ते ध्वंसो नाभ्युपगम्यत इति । तन्न, तथासति तत्वज्ञानपर्यन्तमनुवर्तमानः प्रपञ्चस्तत्वज्ञानानन्तरं क्व गत इति प्रश्नस्य भवन्मते उत्तराभावप्रसंगात् ।

यत्तु ध्वंसाभ्युपगन्तृनैयायिकादिमतेपि तत्वज्ञानपर्यन्तमनुवर्तमानं दुःखं क्वगतमिति प्रश्नस्य किमुत्तरम् ? अथ तन्मते आत्यन्तिको दुःखध्वंस स्तत्वज्ञानेन जायत इति चेत् किं तावता? दुःखं क्वगतमिति प्रश्नानिवृत्तेः; अथ दुःखं न कुत्रापि गतम् , तत्वज्ञानोत्तरं न प्रमीयत इति चेत् ? कुतः ध्वंसाधिकरणकालस्य प्रतियोग्यधिकरणत्वाभावानियमस्वीकारादिति चेत् ? सत्यम् , अस्माभिरपि तत्वज्ञानोत्पत्तिक्षणस्य दृश्याधिकरणकालपूर्वत्वाभाव नियमस्य स्वीकारात् ; प्रमायाः स्वसमानविषयकाज्ञानतत्प्रयुक्तदृश्यविरोधि

त्वनियमात् ; शुक्त्यादिप्रमायां तथा दर्शनात् ; तथाच ध्वंसमतिरिक्तमंगी कृत्य प्रतियोगिना साकं तस्यैककालघटितविरोधकल्पनापेक्षया ध्वंसजनक त्वेन नैयायिकाद्यभिमतकारणस्यैव पूर्वोत्तरकालघटितविरोधकल्पनं युक्तम् , ध्वंसस्य बहूनां तादृशध्वंसं प्रतिहेतुत्वस्य च कल्पने गौरवादिति । तन्न, तथासति दण्डाभिघातेन घटो नष्टः तत्वज्ञानेन मोक्ष इत्यादौ तृतीयानुप पत्तेः; तत्र दण्डाभिघातजन्यत्वस्य घटादिनाशे तत्वज्ञानजन्यत्वस्याविद्या निवृत्तिरूपमोक्षे भवन्मतेऽनङ्गीकारात् । नच तत्र तृतीयायाः ज्ञापकत्वम- र्थः,नशधात्वर्थश्च स्वोत्तरक्षणावृत्तित्वस्ववृत्तित्वोभयसम्बन्धेन क्षणविशिष्टत्वम् ज्ञाप्यज्ञापकभावस्य च व्याप्यव्यापकभावनियतत्वात् दण्डाभिघातव्याप कक्षणविशिष्टो घट इत्याद्यस्थले बोधः; द्वितीयस्थले च तत्वज्ञानव्यापकः अविद्यानिष्ठोक्तक्षणसम्बन्ध इति बोध इति नानुपपत्तिरिति वाच्यम् ; —एवं सति दण्डाभिघातकालोत्पत्तिकवायुसंयोगादिव्यापकत्वस्य निरुक्तनाशे स त्वेन दण्डाभिघातेन घटो नष्ट इति वत्तद्वायुसंयोगेन घटो नष्ट इत्यपि व्य वहारापत्तेः । एवं तत्त्वज्ञानेन मोक्ष इतिवत् तत्कालोत्पत्तिकोदासीनवस्त्वन्त रेण मोक्ष इत्याद्यापत्तेश्च. निरुक्तमोक्षे तत्वज्ञानव्यापकत्वस्येव तत्कालो त्पत्तिकवस्त्वन्तरव्यापकत्वस्याप्यनपायात् । जनकत्वस्य तृतीयार्थत्वे च तयो रन्यथासिद्धत्वान्नोक्तापत्तिः ।

एवं तत्वज्ञानस्याविद्यानिवृत्तिरूपमोक्षाजनकत्वे मुमुक्षोः तत्व ज्ञानोद्देशेन श्रवणादौ प्रवृत्त्यनुपपत्तिश्च, मनोवृत्तिविशेषरूपस्य ज्ञानस्य सुखदुःखाभावतत्साधनान्यत्वात् ।

यत्तु मनोनिरोधपूर्वकं निदिध्यासनादौ यतमानस्य मुमुक्षुपुरु षस्य मनोनिरोधादिप्रयुक्तदुःखस्य तत्वज्ञानोत्पत्तिक्षणे विच्छेदात्तादृश दुःखध्वंसरूपत्वं चरमवृत्तिरूपतत्वज्ञाने सम्भवति, यस्योत्पत्तिक्षणे य द्विच्छिद्यते तत्पूर्वं च वर्तते स एव मनःपरिणामस्तस्य मनःपरिणामस्य

ध्वंसः, यथा एकक्षणानन्तरोत्पत्तिकसमानविषयकज्ञानेच्छादिस्थले तादृशो त्तरपरिणामस्य पूर्वपरिणामध्वंसता, तदन्यध्वंसस्वीकारे तत्स्वरूपतद्धेतुत्वादिकल्पने गौरवात्, तथाच तत्वज्ञानस्य दुःखध्वंसरूपत्वात्तदुद्देशेन प्रवृत्तेरुपपत्तिः, एवमभिव्यज्यमानात्मसुखव्याप्यत्वाच्च तत्वज्ञाने इच्छाद्युपपत्तिः, योहि यदा यदिच्छति स कदाचित्तद्व्याप्यमपीच्छतीति सर्वानुभवसिद्धत्वात्, अतएव विपदोपि स्वकीयाः श्रीकृष्णभगवद्दर्शनव्याप्यतया कामिताः कुन्त्या, तदुक्तं श्रीभागवते " विपदस्सन्तुनस्तास्तास्तत्र तत्र जगद्गुरो। भवतो दर्शनं यत्स्यादपुनर्भवदर्शन " मिति, अत एव च " मोक्षःपुनरात्यन्तिकी दुःखनिवृत्ति " रित्युक्त्वा " काम्यश्च दुःखाभावः, दुःखस्य स्वभावतो हेयत्वात्, सुखार्थं तथायमिति चेन्न;- दुःखाभावस्य सुखाहेतुत्वात्, अथ सुखव्याप्यत्वात् स तथेति चेन्न,- तस्य तदव्याप्यत्वादि " त्युक्तमुदयनाचार्यैः बौद्धाधिकारे; सुखव्याप्यत्वस्य काम्यत्वाप्रयोजकत्वे अथेत्यादिशङ्कानुपपत्तेः, युक्तंचैतत्- यस्मिन् सत्यवश्यमिष्टाभावस्तत्र द्वेषस्येव यस्मिन् सत्यवश्यमिष्टं तत्रेच्छाया अपि सम्भवात्; तस्मात्सुखत्वादिवत्सुखादिव्याप्यत्वमपीच्छाप्रयोजकमिति। तन्न, उक्तरीत्या तत्वज्ञानस्य दुःखध्वंसरूपत्वेन दुःखध्वंसत्वेनेच्छाविषयत्वसम्भवेपि ब्रह्मज्ञानत्वेनेच्छाविषयत्वानुपपत्तेः। तेन रूपेण मोक्षहेतुतापक्षे च तद्रूपावच्छिन्ने इष्टसाधनताग्रहादिच्छोपपत्तेः। यस्य दुःखध्वंसरूपत्वं तस्य दुःखध्वंसत्वातिरिक्तरूपेणापीच्छाविषयत्वे उत्तरदुःखस्य पूर्वदुःखध्वंसरूपत्वेन दुःखत्वेनेच्छाविषयताप्रसङ्गात्। ब्रह्मज्ञानस्य ब्रह्मज्ञानत्वेनैवेच्छाविषयत्वानुभवात्। ब्रह्मज्ञानं मे जायतामितीच्छासत्त्वात्। " यज्ञेन दानेन तपसा नाशकेने " ति श्रुत्या तत्त्वेनेच्छाविषयत्वबोधनाच्च। सुखव्याप्यत्वस्य काम्यताप्रयोजकत्वकथनमप्यनुचितम्, व्याप्तेस्तदभावव

दवृत्तित्वव्यापकसामानाधिकरण्यादिरूपायाः अत्यन्तान्योन्याभावघटितत्वेन नानाविधतया तत्तज्ज्ञानानां प्रत्येकमिच्छां प्रति हेतुत्वे परस्परं व्यभिचारेणा व्यवहितोत्तरत्वस्य कार्यतावच्छेदकगर्भे निवेशावश्यकतया गुरुतरकार्यकारणभावबाहुल्यापत्तेः, दुखादौ सुखादिव्याप्यत्वग्रहेऽपि तत्रेच्छानुत्पत्त्या तत्र दुःखत्वादिज्ञानस्य प्रतिबन्धकताया भवद्भिर्वाच्यतया गौरवात् । वायुसंयोगादौ चन्दनसंयोगादिजन्यसुखादिव्याप्यताग्रहेपि तत्रेच्छानुत्पत्त्या सुखादि व्याप्यत्वग्रहस्येच्छाहेतुत्वकल्पनस्य अनुभवविरुद्धत्वात् । अभिव्यज्यमाना त्मसुखव्याप्यत्वस्य उदासीनपदार्थसाधारण्येन उदासीनपदार्थेष्विच्छानुत्पादेन तत्वज्ञान एव मुमुक्षूणां सर्वेषामिच्छेति नियमानुपपत्तेः । तत्वज्ञानेन मोक्ष इत्यादौ तृतीयाया ज्ञाप्यज्ञापकभावार्थकत्वासम्भवस्य पूर्वमुक्तत्वेन श्रुत्या तत्वज्ञाने उक्तसुखव्याप्यताया बोधयितुमशक्यत्वाच्च । विपदस्सन्त्वि त्यादिकुन्तीवाक्ये च विपदामिच्छाविषयत्वमुपपद्यते, तासां भगवद्दर्शन हेतुभूतं यद्भगवत्सान्निध्यं तद्धेतुभूतभगवत्स्मरणहेतुतया परम्परया सुख प्रयोजकत्वेन इष्टसाधनताज्ञानादेव तत्रेच्छासम्भवात् । बौद्धाधिकारवाक्येपि सुखव्याप्यत्वपदस्य सुखप्रयोजकत्वपरतया शङ्कोपपत्तेश्च । सुखव्याप्यत्वस्य न काम्यताप्रयोजकत्वसम्भवः, सुखार्थं तथायमिति प्रथमशंका च साक्षाद्धेतुत्व मादाय प्रवृत्तेति न पौनरुक्त्यमिति बोध्यम् ।

यदपि ज्ञानत्वव्याप्यधर्मावच्छिन्नजनकतानिरूपितजन्यतावन्नाश प्रतियोगित्वमेव ज्ञाननिवर्त्यत्वम् ; उत्तरज्ञाननिवर्त्यपूर्वज्ञाने च न सिद्ध साधनम् । प्रतियोगितासम्बन्धेन योग्यविभुविशेषगुणनाशं प्रति स्वसामाना धिकरण्यस्वपूर्वत्वोभयसम्बन्धेन योग्यविभुविशेषगुणत्वेन कारणतया तादृश विशेषगुणत्वस्य च ज्ञानान्यावृत्तित्वरूपज्ञानत्वव्याप्यत्वाभावात् ; नच स्मृतित्वावच्छिन्नजनकतानिरूपितजन्यतावन्नाशप्रतियोगिनि संस्कारे सिद्धसाधनं तद्वदेव जगतोपि सत्यत्वापत्त्या अर्थान्तरं चेति वाच्यम्-

स्मृतेस्संस्कारनाशकत्वे मानाभावात्; स्मृतौ वा जातायां संस्कारो दृढो भवतीत्यनुभवात; दृढत्वं च स्वसमानविषयकत्व--स्वसामानाधिकरण्योभय सम्बन्धेन संस्कारान्तरविशिष्टत्वम्; नचैवं विलक्षणस्मृत्या विलक्षणसंस्कारा नुमानं न स्यात्, स्मृतेस्संस्कारनाशकत्वे च स्मृत्या पूर्वसंस्कारनाशेन विलक्षणस्मृत्युत्पत्त्या तया तदनुमानसम्भवः, वैलक्षण्ये च जातिविशेषा विति वाच्यम्;–स्वसमानविषयकत्व-सामानाधिकरण्योभयसम्बन्धेन संस्कार विशिष्टसंस्कारत्वेन तत्समनियतजातिविशेषेण वा विलक्षणस्मृतिहेतुतयैवो क्तानुमानोपपत्तौ स्मृतेस्संस्कारनाशकताया अकल्पनात्, तत्कल्पने गौ रवादिति। तन्न, प्रतियोगितासम्बन्धेन तत्तद्विशेष्यकतत्तत्प्रकारकसंस्कारनाशं प्रति जनकतासम्बन्धेन तत्तद्विशेष्यकतत्तत्प्रकारकस्मृतेरनुगतहेतुतयैव नि-र्वाहे संस्कारनाशं प्रति चरमस्मृतिव्यक्तीनां तत्तद्व्यक्तित्वेन हेतुत्वकल्पनस्या नुचितत्वात्। नच स्मृतिसामान्यस्य संस्कारनाशकतापक्षेपि नोक्तानुगत हेतुत्वसम्भवः, घटपटादिरूपनानाविषयावगाहिनाऽनुभवेन जनितस्य ता वद्विषयकसंस्कारस्य पटाद्येकैकगोचरस्मरणेनाऽविनाशात्, तादृशनाशं प्रति स्वजनकत्व-स्वसमानविषयकत्वोभयसम्बन्धेन स्मृतित्वेन हेतुत्वे च प्रत्येकगो चरनानासंस्कारजनितसमूहालम्बनस्मरणस्य स्वजनकसकलसंस्कारनाशकत्वा नुपपत्तिः, प्रत्येकं संस्काराणां स्वसमानविषयकत्वाभावादिति वाच्यम्;-प्रतियोगितया संस्कारनाशं प्रति स्वानतिरिक्तविषयकत्वस्वपूर्वत्वोभयसम्ब-न्धेन स्मृते हेतुत्वे दोषविरहात्। नच स्वानतिरिक्तविषयकत्वं न स्वाविष-याविषयकत्वम्, प्रमेयत्वादिना सकलप्रमेयविषयकस्मरणस्याविषयाप्रसिद्धेः संस्कारनाशकतानुपपत्तेः, भावत्वादिना सकलभावादिविषयकस्मरणात् घट इत्यादिज्ञानजन्यसंस्कारनाशापत्तेश्च, किन्तु स्वावृत्तिविषयिताशून्यत्वम्, उभयथापि सम्बन्धमध्ये तत्तत्स्मरणव्यक्तिरूपस्वपदार्थमनन्तर्भाव्याविषय-त्वस्यावृत्तित्वस्य चाप्रसिद्ध्या दुर्निर्वचत्वेन तत्तद्व्यक्तिविश्रामस्यावश्यकता,

स्वनिष्ठभेदप्रतियोगितावच्छेदकविषयिताशून्यत्वरूपानतिरिक्तविषयकत्वेऽपि भेदे तत्स्मृतिनिष्ठत्वमावश्यकम् , अन्यथा अवच्छेदकान्तस्य विषयित्वाऽव्यावर्तकतापत्तेरिति वाच्यम्;— स्वविशिष्टविषयितावत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्यैवानतिरिक्तविषयकत्वरूपत्वेन स्वपदार्थस्य सम्बन्धाप्रवेशेऽपि दोषाभावात् । विषयितायां स्वविशिष्टत्वं च स्वनिष्ठभेदप्रतियोगितावच्छेदकत्वसम्बन्धेनेति ।

नच चरमस्मृतिव्यक्तीनां नाशकतापक्षेऽपि चरमस्मृतिसामान्ये वैजात्यं कल्पयित्वा तेन रूपेणानुगतहेतुत्वकल्पनसम्भव इति वाच्यम् , तादृशवैजात्ये मानाभावात्कल्पनागौरवाच्चरमस्मृतिपर्यन्तमनन्तसंस्काराणां सत्त्वोपगमे स्मृतिधारापत्तेश्च । नचोद्बोधकाभावान्न तथेति वाच्यम्;- सदृशसम्बन्ध्यात्मकयद्व्यक्तिज्ञानादेव यत्पुरुषस्य सति संस्कारे यद्यदर्थस्मृतिस्तत्तत्पुरुषीयतत्तदर्थस्मृतौ तत्तद्व्यक्तिज्ञानत्वेनैवोद्बोधकत्वेन तस्य तत्र सत्त्वात् ; अन्यथोद्बोधकस्य विशिष्य स्मृतिहेतुतयैवानतिप्रसङ्गेऽनुभवस्यापि तद्धेतुत्वं न स्यात् ; प्रतिपुरुषं जगति संस्कारो नित्यः स्यात् संस्कारो नैव वा स्यात् , अनुभवध्वंसेनैव सव्यापारतानिर्वाहात् , अतिप्रसङ्गस्योद्बोधकेनैव वारणात् ।

किञ्च स्मृतित्वेन चरमस्मृतित्वेन वा संस्कारनाशकत्वमिति विचार एवानवसरग्रस्तः, चरमस्मृतित्वस्यापि ज्ञानत्वव्याप्यत्वाविशेषेण तत्कल्पेऽपि सिद्धसाधनादेर्दुर्वारत्वेन भवतां स्मृतित्वेन संस्कारनाशकत्वखण्डनपूर्वकं चरमस्मृतित्वेन तद्व्यवस्थापनस्यानुचितत्वात् ।

यदपि साक्षात्कारत्वावच्छिन्नजनकतानिरूपितजन्यतावन्नाशप्रतियोगित्वमेव ज्ञाननिवर्त्यत्वम् , अधिष्ठानसाक्षात्कारत्वेनैवाध्यस्तनिवृत्तिं प्रति कारणतयोक्तसाध्यस्य शुक्तिरूप्यप्रपञ्चोभयसाधारणत्वात् ; जनकतायां साक्षात्कारत्वावच्छिन्नत्वनिवेशाच्च नोत्तरज्ञाननिवर्त्यपूर्वज्ञाने नवा स्मृति

निवर्त्यसंस्कारे सिद्धसाधनादिकमिति । तन्न, 'सत्यं ज्ञान' मित्यादिशोधक वाक्यजन्यज्ञानस्य प्रपञ्चनिवर्तकत्वापत्तिवारणाय शक्तिविशेषविशिष्टत्वेनैव ज्ञानस्याज्ञाननिवर्तकत्वं न त्वधिष्ठानसाक्षात्कारत्वेन, शक्तिविशेषं विना समानविषयकत्वमात्रेणाज्ञाननिवर्तकत्वस्वीकारे नायं स इति भ्रमप्रयोजका ज्ञानस्य सोयमिति वाक्यजन्यज्ञानेनैव निवृत्तिर्नतु तत्समानविषयकेणाप्ययम् मिति ज्ञानेनेति व्यवस्थानुपपत्तिरित्यस्याद्वैतसिद्धावेव वक्ष्यमाणतयोक्तसा क्षात्कारत्वावच्छिन्नजनकताघटितसाध्यस्य प्रपञ्चे अभावेन बाधापत्तेः । तत्र गुर्व्यां " नायं स इति भ्रमसिद्धभेदस्य तत्तेदन्तोपहितप्रतियोग्यनुयो गिकत्वात्तज्जनकाज्ञानमप्युपहितयोरैक्यविषयकम, नतु व्यक्तिमात्ररूपा खण्डैक्यविषयकम्, अतस्सोयमिति ज्ञानमप्युपहितयोस्तादात्म्यविषयकम्, अयमिति ज्ञानं तु न तथेति तत्र शक्तिविशेषेण निवर्तकत्वस्वीकारानावश्य कते " त्याशङ्क्य, " उपहितयोर्हि भेदसहिष्णुतादात्म्यमपि नास्ति, दूरे भेदासहिष्णुरैक्यम्, नहि घटाकाशं पटाकाशमित्युक्ततादात्म्य स्वीकारेपि तस्य भेदाविरोधित्वेन न भेदजनकाज्ञानविषयत्वम्, नह्यत्यन्ता भेदे तादात्म्यादिसंसर्गप्रमा, घटो घटस्तद्व्यक्तिस्तद्व्यक्तिरिति संसर्गबुद्ध्य नुदयात्; तथाचोक्तभेदश्शुद्धव्यक्तिप्रतियोग्यनुयोगिको नायं स इत्याका रस्तु तत्तेदन्त्वयोरुपलक्षणत्वमात्रेण नतु भेदधीविषयत्वेन; नचैवं प्रतियो गितानुयोगितावच्छेदकराहित्येन भेदधीरेव न सम्भवतीति वाच्यम्, प्रति योग्यंशे ह्यप्रकारस्य न प्रतियोगितावच्छेदकत्वेन भानम्, तथाच प्रतियो ग्यंश इव प्रतियोगितारूपसम्बन्धांशेप्यवच्छेदकस्योपलक्षणत्वं नतु तदव च्छिन्नत्वेन प्रतियोगिताभानम्, अतएव शुद्धब्रह्मण्यानन्दचिद्रूपभेदः कल्पित स्सङ्गच्छते, एवंच शुद्धव्यक्तिरूपैक्याविषयकाज्ञाननाशकमुक्तवाक्यजन्य ज्ञानमप्युक्तविषयकमेवे" ति समाहितम् । किंच साक्षात्कारत्वं जनकता वच्छेदकमुभयवादिसिद्धं दुर्वचम् । तथाहि । न तावदिन्द्रिय

जन्यज्ञानत्वं साक्षात्कारत्वं जनकतावच्छेदम्, शुक्त्यादिसाक्षात्काररूप वृत्तेरिन्द्रियजन्यत्वेन दृष्टान्ते साध्योपपत्तावपि बाधस्य दुर्वारत्वात्; तत्त्वमसीत्यादिवाक्यजन्यज्ञानस्येन्द्रियजन्यत्वघटितनिरुक्तसाक्षात्कारत्वाभा-वात्। नापि जातिविशेषः, भवन्मते ब्रह्मभिन्नसामान्यस्यानित्यत्वेन समवायानङ्गीकारेण च नित्यानेकसमवेतात्मकजातेरनङ्गीकारात्। यत्तु यस्य प्रमातुर्यं बोधमादाय बोद्धृत्वं तदभिन्नार्थविषयकज्ञानत्वमेव तस्यापरोक्षत्वम्, तदभिन्नत्वं च मनोनवच्छेदप्रयुक्तो यो भेदस्तच्छून्यतावच्छेदकत्वम्, तेन घटादिप्रत्यक्षकाले घटादौ प्रमातृभेदेपि न क्षतिः, यद्विषयावच्छेदेन हि वृत्तिरूपेण परिणतमनस्सम्बन्धस्तद्विषयावच्छेदेन पूर्वं सत उक्तभेदस्य नाशादुक्तशून्यता, सुखादौ तु सा सहजैव, तन्मनोवच्छिन्नचिद्भेदशून्यतावच्छेदकविषयकज्ञानत्वं तन्मनोवच्छिन्नज्ञानस्यापरोक्षत्वमिति पर्यवसितम्; तेन पुरुषान्तरीयाभिन्नविषयकज्ञानन्नापरोक्षमिति; तन्न, प्रपञ्चानिवर्तकवृत्तौ निरुक्तसाक्षात्कारत्वाभावेन बाधापत्तेः, घटाद्यवच्छिन्नचित इव ब्रह्मावच्छिन्नचितोऽप्रसिद्धत्वेन ब्रह्मणः निरुक्तभेदशून्यतावच्छेदकत्वासम्भवात्तद्विषयकत्वस्य शुक्त्यवच्छिन्नचिद्रूपज्ञाने सम्भवाच्च। ब्रह्मणो वृत्तिविषयत्वस्य कैश्चिदङ्गीकारेपि चिद्विषयत्वस्य कैरप्यनङ्गीकारात्। यदप्यावरणसामान्याभावप्रयोजकवृत्तित्वमेव तथा, आवरणं च द्विविधं - असत्त्वापादकं अभानापादकं च तत्राद्यं परोक्षापरोक्षसाधारणस्वसमानविषयकवृ-त्तिसामान्येन निवर्तते, द्वितीयन्त्वपरोक्षवृत्त्यैवेति निरुक्तसाक्षात्कारत्वस्य च तत्त्वमस्यादिवाक्यजन्यवृत्तिसाधारणत्वान्न बाध इति। तन्न, शुक्त्यादिगोचरवृत्तेः शुक्त्याद्यवच्छिन्नाज्ञानाभावप्रयोजकत्वेप्यज्ञानसामा-न्याभावप्रयोजकत्वाभावेन दृष्टान्ते साध्यवैकल्यात्। नच शुद्धचिति शुक्त्यवच्छेदेनाज्ञानसामान्याभावश्शुक्तिगोचरवृत्तिप्रयोज्य इति तदवच्छेदेन विद्यमानाज्ञानसामान्याभावप्रयोजकत्वं शुक्तिज्ञानेऽक्षुण्णमिति न साध्यवैकल्यमिति वाच्यम्, चैत्रादिशुक्तिज्ञानस्य शुक्त्यवच्छेदेन चै-

मीयाज्ञानसामान्याभावप्रयोजकत्वेपि तदवच्छेदेनापि तादृशवृत्तिदशायां अज्ञानसामान्याभावविरहेण तादृशाभावप्रयोजकत्वाभावेन दृष्टान्ते साध्य वैकल्यात् । एकाज्ञानपक्षे शुक्त्याद्याकारवृत्त्यावरणोच्छेदे सत्यां मोक्षापत्त्या शुक्त्यादिज्ञानस्यावरणनिवर्तकत्वाभावाच्च । एवं साक्षात्कारत्वेन ज्ञाननिवर्त्यत्वनिवेशे परोक्षभ्रमानिवर्त्यपरोक्षभ्रमविषयप्रातिभासिके निरुक्त साध्याभावेन तत्र दृश्यत्वस्य व्यभिचारापत्तिः । एतेन परोक्षप्रातिभासिकभ्रमे साक्षात्कारत्वेनानिवर्तकत्वेपि तस्य दृष्टान्तत्वानभ्युपगमान्न दोष इति गुर्व्यामुक्तं निरस्तम् । एवमुपादानप्रत्यक्षस्य साक्षात्कारत्वेन प्रवृत्तिप्रागभावनाशात्मकप्रवृत्तिं प्रति कारणतया तादृशप्रागभावे सिद्धसाधनम् । नच प्रागभावस्यानङ्गीकारान्न तत्र सिद्धसाधनम् नाशत्वेनात्यन्ताभावत्वेन वा प्रयोज्यत्वनिवेशात्तदङ्गीकारेपि न दोषः प्रवृत्तित्वेन स्वप्रागभावनाशस्योपादानप्रत्यक्षप्रयोज्यत्वेपि नाशत्वेन तत्प्रयोज्यत्वाभावादिति वाच्यम् ;- अतिरिक्तप्रागभावानङ्गीकारेपि प्रतियोगिजनकस्य तन्नाश्यावस्थाविशेषस्य प्रत्यक्षादिसिद्धस्यावश्यकत्वात् तत्रैव सिद्धसाधनात् । प्रपञ्चस्य केनचिद्रूपेण नाशस्य साक्षात्कारप्रयोज्यस्याङ्गीकारमात्रेणोक्तसाध्यसत्त्वनिर्वाहेणोक्तसाध्यस्य ब्रह्मज्ञानानन्तरं अननुवृत्ति पर्यवसायित्वाभावात् , स्थूलरूपविशिष्टस्य नाशेपि सूक्ष्मरूपेणावस्थान सम्भवात् , साक्षात्कारत्वावच्छिन्नप्रयोज्यस्वस्वोपादानान्यतरत्वावच्छिन्नाभावकत्वमिति परिष्कारेच साक्षात्कारत्वावच्छिन्नप्रयोजकतानिवेशवैफल्यात् , ज्ञानप्रयोज्यत्वनिवेशेनैवोपपत्तेः ; पूर्वोक्तपरिष्कार एव पर्यवसानेन पूर्वोक्त दोषाणां दुर्वारत्वादिति दिक् ।

इत्यनन्तार्यस्य कृतौ न्यायभास्करे
ज्ञाननिवर्त्यत्वभङ्गश्चतुर्थः ॥

—(*)—

## अथ प्रतीयमानत्वरूपमिथ्यात्वभङ्गः।

यदपि स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वं वा साध्यम्, तच्च स्वप्रकारकधीविशेष्यताऽव्यापकाभावप्रतियोगित्वपर्यवसितम्, एवकारस्य व्यापकत्वरूपाशेषपरत्वात् वाच्य एव मेयत्वमित्यादौ वाच्यत्वे मेयत्वस्येव प्रकृते स्वात्यन्ताभावे स्वप्रकारकधीविशेष्यत्वव्यापकतालाभात्। नच समवायेन घटाधिकरणे कपाले संयोगेनाभावमादाय सिद्धसाधनमिति वाच्यम्, स्वनिष्ठप्रकारतावच्छेदकसम्बन्धावच्छिन्नत्वेन प्रतियोगितायां विशेषणीयत्वात्; नच समवायादिना घटाद्यधिकरणकपालादौ समवायसम्बन्धावच्छिन्नाभावस्वीकारे कपालादौ घटादिप्रत्यक्षकाले घटाभावादेरपि प्रत्यक्षापत्तिः, कपालादिकं सदा घटाद्यभाववदित्यादिज्ञानस्य प्रमात्वव्यवहारापत्तिश्चेति वाच्यम्;—अधिष्ठानगतस्य सत्त्वस्याऽऽरोपोऽनादिदृढवासनासहितो दोषविधया तत्र मिथ्यात्वग्रहे प्रतिबन्धक इति घटादिप्रत्यक्षकाले चक्षुरादिना घटाभावादेः प्रत्यक्षापत्तिविरहादुक्तप्रमात्वव्यवहारापत्तेश्च वारणात्; मिथ्यात्वग्राहकश्रुत्यादिना उक्तारोपस्योपमर्दानन्तरं तस्य प्रत्यक्षादिसम्भवात्; नच प्रतियोग्यभावयोरेकाधिकरणवृत्तित्वं न सम्भवतीति वाच्यम्, तयोरेककालवृत्तित्वसम्भववदेकदेशवृत्तित्वाविरोधात्; नच प्रतियोग्यधिकरणकाले तदभाववृत्तित्वमवच्छेदकभेदेनैव, तथा देशेपि स्यात्, तथाच न मिथ्यात्वमिति वाच्यम्;- किंचिद्देशावच्छेदेन काले किंचित्कालावच्छेदेन च देशेऽभावस्य वृत्तिरिति स्वीकारे देशकालनिष्ठानन्तावच्छेदकताव्यक्तीनां कल्पने महागौरवात्; घटादेरत्यन्ताभावस्यानवच्छिन्नस्यैव सर्वत्र स्वीकारात्; नचैतत्काले गृहे घटो नास्तीति धीः कालनिष्ठमवच्छेदकत्वमवगाहत इति वाच्यम्, गृहादिनिष्ठाया अधिकरणताया अवच्छेदकत्वस्याभावं हि सा तत् कालेवगाहते; नन्वेवं कार्याव्यवहितप्राक्कालावच्छेदेन कार्यवद्देशे वर्तमानस्याभावस्याप्रति

योगित्वे सत्यनन्यथासिद्धत्वं कारणत्वमित्यादिव्यवहारो नोपपद्यत इति चेत् ! नोपपद्यताम् ; तथापि यत्क्षणावच्छेदेनोत्पद्यमानस्य कार्यस्य यद्देश सम्बन्धस्तत्क्षणाव्यवहितपूर्वक्षणावच्छेदेन कारणस्य तद्देशसम्बन्ध इति यत्कार्यनिष्ठं कारणस्य सामानाधिकरण्यं तदवच्छेदकघटत्वादिरूपस्य दण्डादिव्यावृत्तस्य घटादिकार्ये सत्त्वेन स्वसामानाधिकरण्यावच्छेदकघटत्वकत्व रूपस्य घटकारणत्वस्य दण्डादौ व्यवहार उपपद्यत एवेति । तत्र, अवृत्तित्व मादायार्थान्तरादिभिरुक्तसाध्यपरिष्कारस्य पूर्वमेव निरस्तत्वात् । घटादिविशेष्यकाधिष्ठानगतसत्त्वारोपस्य प्रतिबन्धकतास्वीकारेण कपालाद्यधिकरणकतादृशाभावप्रत्यक्षापत्तिवारणमप्यनुचितम् , वस्तुतो घटादिमद्भूतलादि तद्विशेष्यकघटाभावप्रकारकप्रत्यक्षं प्रत्युक्त सत्त्वारोपस्य प्रतिबन्धकत्वे भूतले घटादिप्रत्यक्षप्रतिबन्धकदोषादि समवधानदशायां घटादावुक्तसत्त्वारोपकाले जायमानस्य तद्भूतले घटाद्यभावप्रत्यक्षस्यानुपपत्तेः, प्रतियोगिमत्यपि प्रतियोगिग्रहप्रतिबन्धकदोषादि सत्त्वे तदभावप्रत्यक्षस्य सर्वैरप्यभ्युपगमात् । नच घटवति भूतले दोषादि सत्त्वेपि व्यावहारिकस्य पारमार्थिकस्य वा घटाभावस्य न प्रत्यक्षम्, तथासति तादृशज्ञाने भ्रमत्वव्यवहारानुपपत्तेः; प्रमातिरिक्तज्ञानबाध्यार्थविषयकत्व रूपभ्रमत्वस्य तादृशज्ञाने अभावात्, किन्तु प्रातिभासिकस्यैव घटाभावस्य तत्र प्रत्यक्षम्, तथाच तादृशभूतलादिविशेष्यकप्रातिभासिकान्यघटाभावप्रत्यक्षं प्रत्युक्तसत्त्वारोपस्य प्रतिबन्धकत्वे न किंचिद्बाधकमिति वाच्यम् , तादृशभूतलादिविशेष्यकप्रातिभासिकान्यघटाद्यभावप्रत्यक्षस्याप्रसिद्धया तत्सामग्रया अकल्पनादेव तादृशप्रत्यक्षापत्तिवारणे उक्तप्रतिबन्धकताकल्पनस्य निरर्थकत्वात् । नच जीवन्मुक्तादेर्निरुक्तसत्त्वारोपोपमर्दवतां तादृशप्रत्यक्षं प्रसिद्धमिति तादृशप्रत्यक्षसामग्रयाः कल्पनीयतया तादृश सामग्रीबलादिदानीं तादृशाभावप्रत्यक्षवारणाय निरुक्तप्रतिबन्धकत्वकल्पन मावश्यकमिति वाच्यम् , घटस्सन्नित्यादिरूपसत्त्वारोपशून्यतादशायां ता

दशाभावप्रत्यक्षापत्तेरेवमप्यवारणात् । नच तादृशारोपजन्योद्बुद्धसंस्कारस्य तादृशारोपशून्यतादशायामपि सत्त्वान्नोक्तापत्तिरिति वाच्यम्, एवमपि घटवद्भूतले घटाभावविषयकयोरनुमितिशाब्दबोधयोरप्रातिभासिकाभाव भानस्योक्तप्रतिबन्धकबलेन वारणासम्भवेन तादृशज्ञानयोः प्रमात्वव्यव हारस्य वारयितुमशक्यत्वात् । तादृशानुमितिशाब्दबोधयोः प्रमात्वव्यव हारस्येष्टत्वे च प्रत्यक्षेपि तादृशव्यवहारे इष्टापत्तिसम्भवेन निरुक्तप्रतिब न्धकताकल्पनस्य व्यर्थत्वात् । नच प्रतियोगिग्रहप्रतिबन्धकदोषादिसमव धानदशायां तादृशप्रत्यक्षस्येष्टत्वेपि तादृशदोषादिविरहदशायां अभावप्रत्यक्ष वारणाय निरुक्तप्रतिबन्धकत्वकल्पनमावश्यकमिति वाच्यम्; तद्दशायां घटादि लौकिकप्रत्यक्षसामग्रीरूपप्रतिबन्धकबलादेवोक्तापत्तिवारणात् । निरुक्तसत्त्वा रोपप्रतिबन्धकतागतेपि तद्दशायां प्रातिभासिकघटाभावप्रत्यक्षापत्तिवारणायो-क्तसामग्र्या अभावलौकिकप्रत्यक्षं प्रति प्रतिबन्धकताया आवश्यकत्वात् ।

यदप्युक्तमिदानीं गेहे घटो नास्तीति बुद्धेरेतत्काले गृहादिनिष्ठघटा द्यधिकरणतावच्छेदकत्वाभाव एव विषय इति । तन्न, प्रतियोग्यभावयोर-विरोधवादिनां भवताम्मते अभावाधिकरणताया इव प्रतियोग्यधिकरणताया अपि किंचिदनवच्छिन्नतया गृहादिनिष्ठघटाद्यधिकरणतावच्छेदकत्वस्यैव अप्र-सिद्धत्वेन तदभावाप्रसिद्धेः; प्रतियोग्यभावयोर्विरोधभञ्जनार्थमेवावच्छेदक भेदस्वीकारात्, प्रतियोग्यभावयोरविरोधे अवच्छेदकभेदस्याकल्पनीय त्वात् । एतत्काले गेहे घटाभाव इति प्रतीतेरेतत्कालावच्छेदेन गेहे घटा भावविषयकत्वेन तत्समानविषयकत्वेनानुभवसिद्धायाः इदानीं गेहे घटो नास्तीति बुद्धेरपि एतत्कालावच्छेदेन गृहादौ घटाभावविषयकत्वस्य युक्त-त्वात् । नचैतत्काले गेहे घटाभाव इत्यत्रैतत्कालविशिष्टगेहे घटाभावविषय कत्वं न त्वेतत्कालावच्छेदेन गृहादौ घटाभावविषयकत्वम्, विशिष्टं चातिरिक्त

मिति वाच्यम्;— तथा सतीदानीं गेहे घटो नास्तीति बुद्धेरपि विशिष्ट गेहे घटाद्यभावविषयकत्वेनैवोपपत्तावच्छेदकत्वाभावविषयकत्वकल्पनस्या युक्तत्वात् । इदानीं गेहे घटो नास्तीत्यादाववच्छेदकत्वानुल्लेखेनावच्छेदकत्वा भावविषयकत्वस्यायुक्तत्वात् । यादृशशब्दाद्यादृशार्थः प्रतीयते असति बाधके तादृशशब्दोल्लिखितप्रत्ययस्य तादृशार्थविषयकत्वनियमाच्च ।

यदपि स्वमते सर्वेषां कारणानां कार्याव्यवहितपूर्वक्षणावच्छेदेन कार्याधिकरणवृत्त्यभावाप्रतियोगित्वासम्भवेपि स्वसामानाधिकरण्यावच्छेदकघट त्वादिमत्त्वरूपघटादिनिष्ठव्याप्तिनिरूपकत्वघटितं कारणत्वं दण्डादेरुपपद्यत इत्युक्तम् ; तन्न, आधेयतावच्छेदकत्वस्यातिप्रसक्तधर्मसाधारणतया तद्विशेष रूपसामानाधिकरण्यावच्छेदकत्वस्यापि तथात्वावश्यम्भावेन तादृशधर्मवत्त्वस्य व्याप्तिरूपत्वाभावात् । घटत्वादौ भूतलादिवृत्तितावच्छेदकत्वस्यानुभव सिद्धत्वात् । एवं कारणताशरीरे निरुक्तव्याप्तेः घटकत्वे नियतान्वयव्यतिरेक निश्चयस्य कारणताग्रहं प्रति सर्वानुभवसिद्धं हेतुत्वं व्यतिरेकव्यभिचारज्ञानस्य तत्प्रतिबन्धकत्वं च न स्यात्, तादृशव्याप्तिग्रहे तस्याविरोधित्वादिति ।

यदपि घटत्वाद्यवच्छिन्नप्रकारतामात्मभिन्नत्वावच्छिन्नप्रकारतां वा पक्षीकृत्य स्वव्यापकाभावप्रतियोगितावच्छेदकावच्छिन्नत्व - स्वनिरूपितत्वो भयसम्बन्धेन विशेष्यताविशिष्टत्वं साध्यम् , दृश्यनिष्ठप्रकारतात्वं हेतुः, इदं रजतमित्यादिज्ञानीयरजतादिप्रकारता दृष्टान्तः, तादृशज्ञानीयरजतादि प्रकारतायामुक्तोभयसम्बन्धेन शुक्त्यादिनिष्ठविशेष्यताविशिष्टत्वस्य सत्त्वात ; एवंच प्रातिभासिकानभ्युपगमेपि न क्षतिः; यद्वा प्रातिभासिकानभ्युपगमे गगनाभावादिकं दृष्टान्तीकृत्य स्वसमानाधिकरणाभावप्रतियोगित्वं प्रपञ्चे साध्यते,तच्च स्वाधिकरणावृत्तित्व-वृत्तित्वोभयाभाववदभावप्रतियोगित्वम् ; गगना भावे गगनात्मकाभावप्रतियोगित्वमादाय दृष्टान्ते साध्यनिर्वाहः; अवृत्त्य भावाप्रतियोगित्वस्य पक्षविशेषणत्वाच्च नावृत्त्यभावप्रतियोगित्वमादायार्था

न्तरम्; अथवा संयोगादिकं दृष्टान्तीकृत्य स्वसमानाधिकरणाभावप्रतियोगित्वमेव साधनीयम्. अव्याप्यवृत्त्यत्यन्ताभावाप्रतियोगित्वेन पक्षविशेषणात् तादृशविशेषणविशिष्टे निरुक्तसाध्यं व्याप्यवृत्त्यत्यन्ताभावेन पर्यवस्यतीति । तन्न, प्रथमकल्पे भ्रमीयप्रकारतायां निरुक्तसाध्यस्य सिद्धत्वात् सिद्धसाधनात् । अवच्छेदकावच्छेदेन साध्यसिद्धिमुपगम्योक्तदोषवारणे पर्वतह्रदौ वह्निमन्तावित्यादिज्ञानीयप्रकारतायाः पर्वतह्रदोभयनिष्ठविभिन्नविशेष्यतानिरूपितत्वेनोक्तोभयसम्बन्धेन ह्रदनिष्ठविशेष्यताविशिष्टत्वेपि यथा न वह्नेर्मिथ्यात्वं तथा जगन्निष्ठप्रकारतायास्तथात्वेप्यमिथ्यात्वापत्तिमादायार्थान्तरस्य दुर्वारत्वात । नच तादृशप्रकारतायां स्वनिरूपितविशेष्यताव्यापकाभावप्रतियोगितावच्छेदकावच्छिन्नत्वस्य साध्यत्वाङ्गीकारान्न दोषः, स्वनिरूपितविशेष्यतात्वेन स्वाधिकरणनिष्ठविशेष्यताया अपि सङ्ग्रहेणाभावे तद्व्यापकत्वसिद्ध्यैवोक्तसाध्यपर्यवसानादिति वाच्यम्;- दृष्टान्तपक्षसाधारणस्यैकस्य स्वत्वस्याभावेन साध्याननुगमापत्तेः । द्वितीयकल्पे अवृत्त्यभावाप्रतियोगित्वस्य पक्षविशेषणत्वे आश्रयासिद्धिः, अभावस्याधिकरणस्वरूपत्वेन गगनादिनिष्ठस्य प्रपञ्चाभावस्य सम्बन्धान्तरावच्छिन्नप्रतियोगिताकस्य वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकस्य च गगनादिरूपत्वेनावृत्त्यभावाप्रतियोगित्वस्य च प्रपञ्चे ऽभावात् । एवं प्रपंचस्य कालिकसम्बन्धावच्छिन्नाभावस्य प्रळयाद्यवच्छेदेन विद्यमानस्यावच्छिन्नवृत्तिकत्वेन तादृशाभावाप्रतियोगित्वाभावादाश्रयासिद्धेस्तृतीयकल्पोपि नोचितः । अवच्छिन्नवृत्तिकाभावाप्रतियोगित्वस्य पक्षविशेषणत्वे मिथ्यात्वघटकाभावस्य व्यावहारिकत्वकल्पे तादृशाभावस्य प्रतियोग्यवच्छेदकदेशकालावच्छिन्नवृत्तिकत्वेन तादृशाभावाप्रतियोगित्वस्य प्रपञ्चे ऽभावाच्चेति दिक् ।

इत्यनन्तार्यस्य कृतौ न्यायभास्करे

स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वरूपमिथ्यात्वभङ्गः ॥५॥

———(०)———

## अथ मिथ्यात्वनिरुक्तिभङ्गः।

यदपि सद्विविक्तत्वमेव मिथ्यात्वं साध्यम्, सत्वं च प्रमाण सिद्धत्वम्, प्रमाणत्वं च दोषाजन्यज्ञानकरणत्वम्, तथाच दोषाजन्यज्ञान विषयभिन्नत्वं साध्यं फलितम्, प्रपञ्चज्ञाने अविद्याया इन्द्रियसन्निकर्षा देरेव वा दोषविधया हेतुत्वाद्दोषाजन्यज्ञानं तत्त्वमसीत्यादिवाक्यजन्यनिर्वि कल्पकज्ञानमेव, तद्विषयान्यत्वं प्रपञ्चे ऽक्षुण्णम्; नच दोषत्वस्य अननु गतत्वादिन्द्रियसन्निकर्षादिजन्यत्वानामनन्तानां प्रातिस्विकरूपेणाभावकूट निवेशे दुर्ज्ञेयता स्यादिति वाच्यम्, भ्रमजनकत्वेन दोषाणामनुगमेन भ्रम जनकाजन्यधीविषयान्यत्वम्मिथ्यात्वमिति सुज्ञेयप्रकारसत्वात्; भ्रमत्वस्यापि जातिविशेषरूपत्वेन तत्तद्विषयघटितत्वनिबन्धनदुर्ज्ञेयत्वस्याभावाच्च; नचो क्तलक्षणस्यासत्साधारण्येनासत्त्वे पर्यवसानसम्भवादर्थान्तरम्, असतो वृत्ति विषयत्वाभावेनोक्तधीविषयान्यत्वस्य तत्रसत्वात्, वृत्तेस्सत्वेन सदसतो स्संसर्गाभावेनासतो वृत्तिविषयत्वासम्भवात्, अळीकाविषयकेनापि विकल्पेन शशविषाणादिपदोक्तिरूपव्यवहारोत्पत्तिसम्भवात् तस्य तादृशवृत्तिविषयत्वेपि तादृशवृत्तेर्भ्रमत्वाभावात्, प्रमाणबाध्याविषयकस्यैव भ्रमत्वात्, "प्रमाण विपर्ययविकल्पनिद्रास्मृतय" इति वृत्तिविभाजकपातंजलसूत्रे विपर्ययात् पृथग्विकल्पस्य परिगणनादसद्विषयकविकल्पाख्यवृत्तेर्धीत्वाभावात्, "ह्रीर्धीर्भी रित्येतत्सर्वम्मन एवे" ति श्रुत्या मनोवृत्तेरेव धीत्वोक्तेः, एवं ब्रह्मणो वृत्तिविषयत्वाभावपक्षे उक्तलक्षणस्य ब्रह्मसाधारण्येन तद्वत्सत्यत्वापत्त्या अर्थान्तरं चेति वाच्यम्,— सत्प्रतियोगिकत्वविशिष्टतादात्म्याधिकरणत्व स्याप्युक्तसाध्यकोटौ निवेशेनार्थान्तराभावादिति। तन्न, वाचस्पतिमते भ्रमजनकाजन्यधीविषयस्याप्रसिद्ध्या तदन्यत्वरूपसाध्याप्रसिद्धेः। तन्मते अखण्डाकारचरमवृत्तेरपि स्वोपहितरूपबाधितार्थविषयकतया भ्रमत्वात्; अळीकविषयकवृत्तेर्धीत्वाभावस्य स्वयमेवोपपादितत्वात्। विवरणादिमते शुद्धस्य वृत्तिविषयत्वस्वीकारेपि तन्मतरीत्या उक्तपरिष्काराश्रयणे उक्त

परिष्कारस्य ब्रह्मसाधारण्यप्रसक्त्या ब्रह्मवारकविशेषणोपादानवैयर्थ्य प्रसङ्गात् । वाचस्पतिमत एव अविद्याया दोषविधया हेतुत्वस्वीकाराच्च । नचासत्ख्यातिस्वीकारात्तादृशधीविषयस्यासत्त्वेपि तदन्यत्वं प्रपञ्चे वक्तुं शक्यमिति वाच्यम् , असत्ख्यातिवादिभिरप्यसन्न भवतीति प्रतीत्या असत्त्वावच्छिन्नप्रतियोगिताकभेदाभ्युपगमेपीदं शशशृङ्गं न भवतीति प्रतीत्यसिद्ध्या शशशृङ्गत्वाद्यवच्छिन्नभेदस्य कैरप्यनभ्युप गमात् , तन्मतरीत्या भ्रमजनकाजन्यधीविषयत्वस्य विशिष्टशृङ्गत्वसम शीलत्वात् । नच तन्मते भ्रमजनकाजन्यधीविषयान्यत्वस्याप्रसिद्धत्वेपि स्वनिष्ठधीविषयतात्वव्यापकभ्रमजनकरूपदोषनिरूपितजन्यतावच्छेदकताकत्वं साध्यम् , अतो न साध्याप्रसिद्धिः, शुक्तिरूप्यनिष्ठधीविषयतासामान्य स्य दोषजन्यतावच्छेदकत्वेन तत्र साध्योपपत्तिश्चेति वाच्यम्;- जग न्मिथ्येत्याद्याकारकजीवन्मुक्तादिज्ञानीयविषयताया दोषजन्यतावच्छेदकत्वा भावेन बाधापत्तेः । शुक्तिरूप्यम्मिथ्या नेदं रजतमित्यादिज्ञानीयविषय ताया दोषजन्यतावच्छेदकत्वाभावेन दृष्टान्ते साध्यवैकल्याच्च । व्याप कत्वमनिवेश्य दोषजन्यतावच्छेदकस्वनिष्ठधीविषयताकत्वस्य साध्यत्वाङ्गी कारे च ब्रह्म क्षणिकमित्यादिज्ञानविषयताया दोषजन्यतावच्छेदकत्वेपि ब्रह्मणो ऽमिथ्यात्वेनोक्तसाध्यस्य सत्यत्वाविघातकत्वेनार्थान्तरात् । नच स्वाभावाविषयकज्ञाननिरूपितस्वनिष्ठविषयतात्वव्यापकदोषजन्यतावच्छेदक ताकत्वस्य साध्यत्वान्नोक्तदोषः, प्रपंचो मिथ्या शुक्तिरूप्यम्मिथ्येत्यादि ज्ञानस्य स्वाभावविषयकत्वेन तदविषयकत्वाभावादिति वाच्यम्;- एक भ्रमे यस्य दोषस्य कारणता तस्य तद्व्यक्तित्वावच्छिन्नं प्रत्येव कारणतया तादृशभ्रमविषयप्रातिभासिके निरुक्तसाध्याभावापत्तेः, तादृशदोषजन्य वच्छेदके विषयताया अनिवेशात् । एवं समानाकारा यादृशयादृश प्रातिभासिकविषयकभ्रमा भिन्नदोषेण जातास्तादृशप्रातिभासिकेष्वपि निरुक्त साध्यासम्भवः, तत्र दोषाणां परस्परं व्यभिचारवारणाय जन्यतावच्छे-

दककोटावव्यवहितोत्तरत्वस्य निवेशावश्यकतया तत्र विषयतानिवेशे प्रयोजनविरहात्। एतेन भ्रमविषयत्वमविनाश्यवृत्तिधर्मवत्त्वं वा साध्यमिति निरस्तम्, सर्वस्यापि क्षणिकत्वादिप्रकारकभ्रमविषयत्वेन सिद्धसाधनादेः दुर्वारत्वात्। स्वविषयकज्ञानत्वव्यापकभ्रमत्वकत्वस्य साध्यत्वाङ्गीकारे च बाधादेः दुर्वारत्वात्, प्रपंचो मिथ्येत्यादिज्ञानस्य भवन्मते भ्रमत्वाभावात्। स्वविषयकज्ञानस्यान्यांशे भ्रमत्वमादायार्थान्तरस्य दुर्वारत्वाच्च। अयं घट इदं रजतमिति समूहालम्बनस्य घटांशे प्रमात्मकस्यापि रजतांशे भ्रमत्वस्य दृष्टत्वात्। नच स्वविषयकज्ञानत्वव्यापकप्रमाभेदकत्वं साध्यमिति नोक्तार्थान्तरमिति वाच्यम्;— तथा सत्ययं घटः अहं ब्रह्मास्मीति समूहालम्बनस्य शुद्धविषयकस्य तदंशे प्रमात्वेन स्वविषयकज्ञानत्वव्यापकप्रमाभेदकत्वस्य साध्यत्वे बाधापत्तेः। द्वितीयसाध्ये विनाशित्वस्यैव साध्यत्वसम्भवेनाविनाश्यवृत्तीत्यादिशिरोवेष्टनं व्यर्थम्। वस्तुतो विनाशित्वस्याविनाश्यवृत्तिधर्मवत्त्वस्य वा अवच्छेदकावच्छेदेन साध्यत्वे सिद्धसाधनाभावेप्यर्थान्तरं दुर्वारम्, विनाशित्वेपि घटादेरमिथ्यात्वस्य द्वैतवादिमतसिद्धत्वादित्यलं विस्तरेण।

इत्यनन्ताचार्यस्य कृतौ न्यायभास्करे
मिथ्यात्वनिरुक्तिभङ्गष्षष्ठः ॥६॥

——(*)——

## अथ सामान्यतोमिथ्यात्वभङ्गः ।

——(*)——

अस्तु वा मिथ्यात्वं यत्किंचित्, तथापि तथाभूतं मिथ्यात्वं सत्यं मिथ्या वा? नाद्यः, अद्वैतहानेः; तत्र दृश्यत्वहेतोर्व्यभिचाराच्च । तत्रानुमितिविषयत्वसत्त्वेन दृश्यत्वाक्षतेः । नान्त्यः, मिथ्याभूतमिथ्यात्वस्य स्वनिष्ठात्यन्ताभावप्रतियोगि-स्वप्रकारकधीविशेष्यताव्यापकीभूताभावप्रतियोगि-त्वकत्वे पर्यवसानेन तस्य प्रपञ्चे अस्माभिरप्यभ्युपगमेन सिद्धसाधनात् । नच तादृशमिथ्यात्वस्य स्वरूपसम्बन्धेन साध्यत्वात् तेन सम्बन्धेन प्रपंचे अनङ्गीकारान्न सिद्धसाधनमिति वाच्यम्; एवमपि जगतस्सत्यताया दुर्वारत्वात् । जगत्सत्यं स्वनिष्ठात्यन्ताभावप्रतियोगि-स्वप्रकारकधीविशेष्यताव्यापकीभूताभावप्रतियोगित्वकत्वादात्मवदित्यनुमानात् । नच आत्मत्वमुपाधिः, दृष्टान्ते साध्यव्यापकत्वात्पक्षे साधनाव्यापकत्वादिति वाच्यम्; — सत्यत्वमस्तु आत्मत्वं मास्त्वित्यप्रयोजकत्वशङ्कायां वारकतर्काभावेनोपाधेस्साध्यव्यापकत्वसन्देहात् । नचैवमपि तस्य सन्दिग्धोपाधित्वं दुर्वारमिति वाच्यम्;- मिथ्यात्वव्यवच्छेदरूपसत्यत्वाभावे निरवच्छिन्नविशेषणतया मिथ्यात्वाभावानुपपत्तिरूपानुकूलतर्कस्य सत्यत्वसाधकानुमाने सत्त्वेन सन्दिग्धोपाधेरदोषत्वात् । अनुकूलतर्कविरहदशायामेव तस्य दोषत्वात् । नचैवमपि मिथ्याभूतमिथ्यात्वाश्रये शुक्तिरूप्ये सत्यत्वाभावाद्व्यभिचारो दुर्वार इति वाच्यम्;- शुक्तौ भासमानरूपस्यैव शुक्तिरूप्यशब्दार्थतया तस्य सत्यत्वात् । मिथ्याभूतस्य रूप्यस्य तत्रोत्पत्तिस्वीकारेपि तद्गतमिथ्यात्वस्य मिथ्यात्वे प्रमाणाभावादुक्तव्यभिचाराप्रसक्तेः । नच शुक्तिरूप्यगतं मिथ्यात्वं मिथ्या मिथ्याभूतधर्मिकत्वात्स्वाप्नगजरूपवदित्यनुमानात्तत्र मिथ्यात्वसिद्ध्या व्यभिचारो दुर्वार इति वाच्यम्, तादृशमिथ्यात्वं न मिथ्या सत्यभूततद्विरुद्धसत्यत्वासमानाधिकरणत्वात् यत्सत्यभूतयद्विरुद्धसमानाधिकरणं न भवति तन्मिथ्या न भवति यथा गोत्वविरुद्धसत्यभूतगोत्वा

भावासमानाधिकरणं गोनिष्ठं गोत्वं न मिथ्येत्यनुमानेनोक्तानुमानस्य सत्प्रतिपक्षितत्वेन तादृशमिथ्यात्वस्य मिथ्यात्वासिद्धेः । नच वन्ध्यासुतनिष्ठे गौरत्वे तद्विरुद्धसत्यभूतश्यामत्वासमानाधिकरणे मिथ्याभूते निरुक्तसामान्य व्याप्तिव्यभिचारेण प्रतिपक्षस्य हीनबलत्वान्न सत्प्रतिपक्षितत्वम्, सामान्य व्याप्तौ सहानवस्थित्यादिसाधारणंविरोधमनिवेश्य तदभावत्वरूपविरोध निवेशेपि यत्र स्वप्ने एकाधिकरणवृत्तित्वेन गजतदभावयोर्ज्ञानं तत्र गजा भावविरुद्धसत्यभूतगजासमानाधिकरणे मिथ्याभूतगजाभावे व्यभिचारो दु-र्वार इति वाच्यम् ; एवमपि सत्यभूतब्रह्मधर्मत्वस्य भवन्मते सत्य त्वासाधकत्ववन्मिथ्याभूतधर्मिकत्वस्यापि मिथ्यात्वासाधकत्वेन तादृश मिथ्यात्वे मिथ्यात्वसाधकानुमानस्याप्रयोजकत्वशङ्काकबळितत्वात् । वस्तु तस्तु ययोर्विरुद्धयोरेकम्मिथ्या तयोरेकापेक्षया अपरमधिकसत्ताकमिति नि-यमात्प्रपञ्चगतस्य मिथ्यात्वस्य मिथ्यात्वे सत्यत्वस्य तात्विकत्वं दुर्वारम्, नतु विरुद्धयोर्यन्मिथ्या तदपेक्षया अपरमधिकसत्ताकमिति नियमः, शुक्तिरूप्ये व्यावहारिकमिथ्यात्वयुक्ते तात्विकसत्यत्वापत्तेः ।

यत्तु मिथ्यात्वावच्छेदकीभूतैकधर्मशून्ययोर्ययोर्विरुद्धयोरेकं मि-थ्या तदपेक्षया अपरमधिकसत्ताकमित्येव नियमः, यथा परस्परविरहरूपयोरजतत्वतदभावयोश्शुक्तौ यथा वा परस्पर विरहव्यापकयोरजतभिन्नत्वरजतत्वयोः तत्रैव उभयत्र रजतत्वापेक्षया तदभावतदवच्छिन्नभेदयोरधिकसत्ताकत्वात् ; अत्र शून्यान्तोपादानादेकगजा रोपितयोः परस्परविरुद्धयोर्गोत्वाश्वत्वयोरेकापेक्षया अपरस्याधिकसत्ताविर हेपि न क्षतिः, तत्र गजत्वात्यन्ताभावव्याप्यत्वरूपमिथ्यात्वावच्छेदकैकधर्म सत्त्वेन तयोस्तच्छून्यत्वविरहात् ; एवं च प्रपञ्चगतमिथ्यात्वापेक्षया सत्य त्वस्याधिकसत्ताविरहेपि न क्षतिः, तत्र सत्यत्वमिथ्यात्वयोर्मिथ्यात्वावच्छे दकीभूतदृश्यत्वरूपैकधर्मवत्त्वेन तच्छून्यत्वविरहादिति । तन्न, भेदाभावस्य प्रतियोगितावच्छेदकस्वरूपतया रजतभिन्नत्वरजतत्वयोरपि परस्पराभावरूप ताया एव युक्तत्वात् परस्परविरहव्यापकत्वोक्तेरयोगात् । यदि च भाव

त्वाभावत्वयोर्विरोधाद्रजतत्वं न रजतभेदाभावः रजतभेदस्य तदभावाभाव रूपत्वाच्च नानवस्थेति विभाव्यते तदा रजतत्वतदभावयोः परस्परविरहरूप त्वोक्त्यसङ्गतिः, तत्रापि रजतत्वाभावस्यैव तदभावाभावरूपत्वात् । किं चोक्तनियमप्रविष्टं विरुद्धत्वन्न तावदेकाधिकरणावृत्तित्वम्, एकगजारोपितयो र्गोत्वाश्वत्वयोरुक्तविरोधाभावादेव व्यावृत्त्या शून्यान्तोपादानवैयर्थ्यात् ; रजतत्वतदभावयोरपि शुक्तौ सामानाधिकरण्यसत्त्वेन तत्र नियमोपपादना योगाच्च, किंतु परस्पराभावतद्व्यापकोभयसाधारणं परस्पराभावव्यापकत्वम् , तथा च तस्य गोत्वाश्वत्वव्यावृत्तत्वेन तद्व्यावर्तकविशेषणानुपादानादुक्तापत्तिर्दुर्वारा ।

यत्तु यथा च सत्यत्वमिथ्यात्वयोर्न परस्परविरहरूपत्वं तथोपपादित मधस्तादित्यद्वैतसिद्धावुक्तम्, तद्भ्रान्तिमूलम्, पूर्वमद्वैतसिद्धौ सत्यत्वमिथ्यात्व योः परस्परविरहरूपत्वाभावादेरनुपपादनात्, प्रत्युत द्वितीयमिथ्यात्वे मिथ्यात्वाभावस्सत्यत्वमित्युक्तत्वाच्च ।

यद्यपि यथेति- येन प्रकारेणेत्यर्थः, तथा- स प्रकारः, उप पादितं- सत्त्वासत्त्वे अधिकृत्य ज्ञापितम् , तथा च सत्त्वासत्त्वयोः परस्पराभावत्वं नास्ति, प्रपञ्चे तयोरेकासत्त्वेप्यपरासत्त्वादिति यथोक्तं प्रथम मिथ्यात्वे, तथा सत्यत्वमिथ्यात्वयोरपि तत्र तुच्छे द्वयोः प्रत्येकासत्त्वादिति भाव इति लघुचन्द्रिकायां तादृशसिद्धिवाक्यं व्याख्यातम् । तन्न, तुच्छास्वी कर्तृमते मिथ्यात्वसत्यत्वयोः प्रत्येकासत्त्वविरहेण तयोः परस्पराभावरूपत्वे बाधकाभावात् , तुच्छस्वीकर्तृमतेपि विशेषाभावकूटातिरिक्तसामान्याभावा स्वीकर्तॄणां भवताम्मते उभयाभावस्य प्रत्येकाभावानतिरिक्ततया स्वप्रकारक धीविशेष्यताव्यापकीभूताभावप्रतियोगित्वसत्तादात्म्योभयपर्यवसितसदसद्विलक्षणत्वरूपमिथ्यात्वाभावत्वस्य सत्यत्वे प्रतिक्षेप्तुमशक्यत्वात् , मिथ्यात्वा भावस्सत्यत्वमिति मूलविरोधाच्च ।

यत्तु तयोः परस्परविरहरूपत्वेऽपि भिन्नसत्ताकत्वान्न विरोधः, व्यावहारिकमिथ्यात्वेन व्यावहारिकसत्यत्वापहारेऽपि काल्पनिकसत्यत्वानपहारादिति तदपि न प्रपञ्चगतसत्यत्वस्य प्रातिभासिकत्वे तदाश्रयस्य प्रपञ्चस्य प्रातिभासिकत्वापत्त्या अर्थक्रियाकारित्वानुपपत्तेः । "सत्यं चानृतं च सत्यमभवदि" ति श्रुतावनृतपदवैयर्थ्यापत्तेश्च, सत्यस्य ब्रह्मणः प्रातीतिकसत्यत्वाश्रयाकाशादिरूपव्यावहारिकशुक्तिरूप्यादिरूपप्रातिभासिकोभयविधप्रपञ्चकारणत्वोक्तेरनृतपदं विनापि सम्भवात् ; शुक्तिरूप्यादिव्यावृत्तसत्यत्वस्य सत्यपदेन ग्रहणे च शुक्तिरूप्यादिग्राहकत्वेनानृतपदसार्थक्यात् ।

यत्तु शुक्तिरूप्यादौ व्यावहारिकस्य मिथ्यात्वस्य प्रातीतिकस्य सत्यत्वस्य च दृष्टत्वेन प्रपञ्चेऽपि तादृशे ते कल्प्येते, शुक्तिरूप्यादाविव प्रपञ्चेऽपि मिथ्यात्वाज्ञानेन सत्यत्वोत्पत्तेरिव प्रपञ्चमिथ्यात्वप्रमया तादृशाज्ञानतत्कार्यसत्यत्वयोरुच्छेदस्वीकाराद्ब्रह्मान्यधर्मबाध्यत्वेन शुक्तिरूप्यादिगतस्येव प्रपञ्चगतस्यापि सत्यत्वस्य प्रातीतिकत्वं युक्तम् , श्रुतौ च सत्यपदस्य व्यवहारकालाबाध्यपरत्वेन नानृतपदवैयर्थ्यमिति । तन्न, प्रपञ्चोत्पादकाज्ञानस्य ब्रह्मप्रपञ्चयोः परस्परतादात्म्याध्यास इव तद्धर्मयोः परस्पराधिकरणे संसर्गाध्यासेऽपि हेतुतायाः क्लृप्तत्वेन नित्यत्वादेरिव सत्यत्वस्यापि ब्रह्मधर्मस्य प्रपञ्चे तदुपादानाज्ञानादेव संसृष्टरूपेणोत्पत्तिसम्भवात्; मिथ्यात्वाज्ञानस्य सत्यत्वोत्पादिहेतुत्वकल्पने गौरवात् । मिथ्यात्वाज्ञानात्सत्यत्वतत्संसर्गयोर्द्वयोरुत्पत्तिकल्पनापेक्षया प्रपञ्चोत्पादकाज्ञानात्सत्यत्वसंसर्गमात्रस्योत्पत्तिकल्पने लाघवात् । प्रपञ्चे भासमानसत्यत्वस्य ब्रह्मधर्मत्वेन पारमार्थिकतायास्तत्संसर्गस्य व्यावहारिकतायाश्च मिथ्यात्ववादश्रद्धालुभिः कल्पयितुं युक्तत्वात् । तादृशश्रद्धापरित्यागे च तत्संसर्गेऽप्यज्ञानस्य हेतुत्वाकल्पनेन तादृशाज्ञानतत्कार्ययोर्निवृत्तौ तत्त्वज्ञानस्य हेतुताया अकल्पनेन च लाघवात्सत्यत्वतत्संसर्गप्रपञ्चानां पारमार्थिकत्वस्यैव युक्तत्वात् ।

यदपि सत्यत्वमिथ्यात्वयोस्समसत्ताकत्वेपि संयोगतदभाववदविरोध इत्युक्तम् तन्न, संयोगतदभावयोरप्यैकावच्छेदेनावृत्तित्वरूपविरोधसत्त्वात् ; समसत्ताकयोरप्यविरोधे 'भेदाभेदयोरविरोधार्थमभेदोपादानाभेदकल्पनं' मिति तयोर्भिन्नसत्ताप्रतिपादनपरभामतीग्रन्थविरोधाच्च । नच मिथ्यात्वस्य सत्यत्वमिथ्यात्वाभ्यां दूषणं नित्यसमा जातिः! तल्लक्षणाभावात्, पक्षे साध्यवैशिष्ट्यभङ्गप्रयोजकीभूतसाध्यधर्मिकसाध्यतदभावविकल्पप्रतिपादकवाक्यत्वस्यैव तल्लक्षणत्वेन मिथ्यात्वस्य सत्यत्वे अद्वैतहानेरेवोक्तत्वेन पक्षे साध्यवैशिष्ट्यभङ्गप्रयोजकत्वाभावात् । "धर्मस्य तदतद्रूपकल्पनानुपपत्तितः । धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमा भवेदि" ति प्राचीनोक्तेः ।

यत्तु विकल्पितकोट्योरेकस्या अद्वैतहानिप्रयोजकत्वेप्यन्यस्याः प्रपञ्चसत्यत्वनान्तरीयकत्वापत्तिद्वारा प्रपञ्चे धर्मिणि मिथ्यात्ववैशिष्ट्यभङ्गप्रयोजकत्वादुक्तलक्षणमस्त्येव, लक्षणे विकल्पितकोट्योरन्यतरस्य तद्वैशिष्ट्यभङ्गप्रयोजकत्वस्य विवक्षितत्वात् ; विकल्पितकोटिद्वयस्य तद्वैशिष्ट्यभङ्गप्रयोजकत्वस्योक्तकारिकास्वरसाल्लाभेपि नानुपपत्तिः, मिथ्यात्वस्यापि मिथ्यात्वधर्मित्वेन तस्य सत्यत्वे मिथ्यात्ववैशिष्ट्यभङ्गादिति तन्न, विकल्पितकोटिद्वयस्य यथासम्भवं प्रपञ्चसत्यत्वापत्त्यद्वैतहान्योः प्रयोजकत्वेपि धर्मिणि मिथ्यात्ववैशिष्ट्यभङ्गप्रयोजकत्वाभावात् । तात्त्विकसत्यत्वस्य मिथ्याभूतमिथ्यात्वं प्रत्यविरोधित्वेन तात्त्विकसत्यत्वापत्तिद्वारापि तद्वैशिष्ट्यभङ्गप्रयोजकत्वायोगात् विमतं मिथ्येत्यादिरीत्याविशेषधर्मावच्छिन्ने मिथ्यात्वस्य साध्यत्वे मिथ्यात्वस्य मिथ्यात्वधर्मित्वाभावेन मिथ्यात्वस्य सत्यत्वकोटेरपि धर्मिणि मिथ्यात्ववैशिष्ट्यभङ्गप्रयोजकत्वासम्भवाच्चेति ॥ .... .... ....

इति श्रीमत्कुलतिलकस्य यादवाद्रिनिवासरसिकस्य अनन्ताचार्यस्य कृतौ
न्यायभास्करे सामान्यतो मिथ्यात्वभङ्गस्सप्तमः ॥

## अथ दृश्यत्वभङ्गोऽष्टमः ।

मिथ्यात्वे साध्ये हेतूकृतं दृश्यत्वमपि किंरूपम्? न तावद्वृत्तेराकाराङ्कविषयत्वरूपं वृत्तिव्याप्यत्वम्, धीत्वरूपजातिविशेषात्मकस्य वृत्तित्वस्य "ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे" ति श्रुत्या मनोवृत्तावेव प्रतिपन्नत्वेन तस्याविद्यावृत्तिसाधारण्यविरहेण शुक्तिरूप्यादौ साधनवैकल्यात्। प्रातीतिके ऽविद्यावृत्तिविषयत्वस्य विवरणानुयायिभिरङ्गीकारेऽप्यन्तःकरणवृत्तिविषयत्वस्य तैरप्यनङ्गीकारात् । अन्तःकरणतद्धर्मसुखदुःखादौ साक्षिभास्ये वृत्तिविषयत्वाभावेन भागासिद्धेश्च । नच शुक्तिरूप्यसुखादेः प्रत्यक्षात्मकवृत्तिविषयत्वाभावेऽप्यनुमितिशाब्दबोधादिरूपवृत्तिविषयत्वमस्त्येवेति नोक्तदोष इति वाच्यम्, एवमपि ब्रह्मणि व्यभिचारस्य दुर्वारत्वात्। "आत्मा वा अरे द्रष्टव्य" इत्यत्र तव्यप्रत्ययेन "ब्रह्म वेद" इत्यत्र द्वितीयया "ब्रह्मजिज्ञासे" त्यत्र कर्मणि षष्ठ्या च शुद्धस्य वृत्तिविषयत्वप्रतिपादनात् । नच शुद्धस्य वृत्तिविषयत्वानङ्गीकर्तुः वाचस्पतेर्मते न तत्र व्यभिचारः, तन्मते "आत्मा वा अरे द्रष्टव्य" इत्यादौ उपहितस्यैव विषयत्वप्रतिपादनात्, तस्य च मिथ्यात्वस्यापि सत्त्वेन व्यभिचाराभावात्; अतएव "सर्वप्रत्ययवेद्ये च ब्रह्मरूपे व्यवस्थिते" इति स्ववचनविरोधस्यापि नावकाशः, उपहितस्यैव सर्वप्रत्ययवेद्यतायास्तत्र विवक्षितत्वादिति वाच्यम्;-- उपहितनिष्ठविषयतायाः केवलनिष्ठत्वस्य त्वयैव स्वीकारात् (गुरुचन्द्रिकायां नीलघटवद्भूतलमिति विशिष्टवैशिष्ट्यावगाहिज्ञानस्य विशेष्ये विशेषणमिति रीत्या तादृशज्ञानस्य च विषयवैलक्षण्येन वैलक्षण्योपपादनावसरे "विशिष्टवैशिष्ट्यावगाहिज्ञाने नीलघटत्वाद्युपहितस्य विशेष्ये विशेषणमिति ज्ञाने केवलघटत्वाद्युपहितस्य विषयत्वात्तयोर्वैलक्षण्योपपत्तिः; अथ नीलत्वाद्युपहितघटत्वानां केवलघटत्वातिरिक्तानां कल्पनापेक्षया नीलत्वाद्यवच्छिन्नविषयतानामवच्छेदकतात्वादिकल्पनमेव युक्तमिति चेन्न, नीलत्वाद्युपहितघटत्वाद्यवच्छिन्नप्रकारत्वानां केवलघटत्वाद्यवच्छिन्नप्रकारताभिन्नत्वास्वीकारात्, अवच्छेदकतात्वादेरखण्डो

स्य विषयतानिष्ठस्य कल्पनायास्तवाधिकत्वात् ; मम तु घटत्वाद्यवच्छि न्नत्वेन स्वीकृतानां प्रकाराणामेव नीलघटत्वाद्युपहितनिष्ठत्वेन स्वीकारान्न गौरवम् । अत एव संयोगरूपादीनामपि केवलनिष्ठानामेवोपहितनिष्ठत्वम् ; येषां तु नाशप्रतियोगित्वद्रव्यत्वादीनां न, केवलनिष्ठतासम्भवस्तेषामप्यवि- द्याद्युपाधिनिष्ठानामेव तदुपहितनिष्ठतास्वीकारान्न गौरवम् ; नचैवमुपहित घटत्वादिज्ञानात केवलघटत्वादिज्ञानकार्यस्य जायमानस्यापत्त्यापत्तिरिति वाच्यम ,— केवलस्याप्युपहितधीविषयत्वस्वीकारात् ; नचैवमुपहितनिष्ठ संयोगादीनां केवलनिष्ठत्वानुरोधेनोपहितकार्यजनकस्य केवलेपि सत्त्वादुप हितनाशे केवलस्यापि नाशापत्तिरिति वाच्यम् ,- नहि येन येन सम्बन्धेन यद्यदुपहिते जायते तेन तेन तत्केवलेपि जायत इति नियमः! येन विषय तासम्बन्धेन ज्ञानमिव प्रतियोगितासम्बन्धेनोपहिते जायमाननाशः केवलेप्या पद्येत , किन्तु जातिविषयकज्ञानस्य व्यक्तिविषयकत्ववत् उपहितविषयक ज्ञानस्य केवलविषयकत्वम्- उपहिते संयोगादिजनकस्य केवलेपि तत्त्वमिति यथानुभवं नियमः ; तथा चोपाध्युत्पत्तिनाशसामग्र्योरेवोपहितोत्पत्तिनाशसा- मग्रीत्वेनोपाध्युत्पत्तिनाशयोरुपहितोत्पत्तिनाशत्वेपि केवलोत्पत्तिनाशत्वाभावेन उपहितनाशस्य केवलनाशत्वं नेति नोक्तदोष " इति प्रतिपादितम् । एवं चोपहितविषयकज्ञानविषयत्वस्य केवले सत्त्वाद्व्यभिचारो दुर्वार ।

एवं शुद्धस्यावेद्यत्वे "स यो ह वै तत्परं ब्रह्म वेद" इत्यादिश्रुतिविरोधापत्तिः, परत्वस्य तन्मतरीत्या शुद्धतामात्ररूपत्वात् । नहि सत्यत्ववादिन इव ज्ञान शक्त्यादिभिः सर्वोत्कृष्टत्वं ब्रह्मणः परत्वमिति मृषावादिनोऽभ्युपगच्छन्ति ! तस्याप्यशुद्धकोटिनिविष्टतया निवर्तनीयान्तर्गतस्य निवर्तकज्ञानविषयत्वा सम्भवात् । " आत्मा वा अरे द्रष्टव्य " इत्यादौ उपहितस्यैव दर्शनविष यत्वे तादृशज्ञानस्य मोक्षसाधनत्वानुपपत्तिः उपहितविषयकत्वादि तथात्वे ' अहमज्ञ ' इत्यादिज्ञानस्यापि तथात्वापत्तिः ।

न तु उपाध्यविषयकत्वे सत्युपहितविषयकज्ञानस्यैव प्रपञ्चोपादानाज्ञाननिवर्तकत्वम्, स्वविशिष्टब्रह्मविषयकवृत्तेरपि स्वोपहितब्रह्मविषयकत्वात् सत्यन्तम्, स्वोपहितान्याविषयकत्वं तदर्थः, स्वाविषयकत्वस्य सत्यन्तार्थत्वे उक्तविशिष्टविषयकवृत्तिवारणेऽपि वृत्त्युपहितांशे अज्ञानादिप्रकारकज्ञानस्य सङ्ग्रहापत्तेः; तुच्छाकारज्ञाने सत्यन्तसत्त्वात्तद्वारणाय विशेष्यदलम् । न च सविषयकत्वमात्रेण तस्य वारणसम्भवात् स्वोपहितनिवेशे गौरवमिति वाच्यम्, -स्वरूपसम्बन्धेन विषयताविशिष्टत्वरूपसविषयकत्वापेक्षया स्वोपहिताखण्डवृत्त्या विषयतासम्बन्धेन विशिष्टत्वस्यागुरुत्वात्; तुच्छाकारवृत्तेरसविषयकत्वमते तेन तद्वारणाच्च; अहं ब्रह्म घटो विनाशीति समूहालम्बनज्ञानस्य मूलाज्ञाननाशकत्वस्वीकारे तु स्वोपहितब्रह्मनिष्ठा या अन्यविषयत्वानिरूपितविषयता तच्छालित्वमेव समानविषयकत्वं निवर्तकत्वौपयिकं वाच्यम्; निवर्तकत्वं च ज्ञानस्य तत्समानविषयकं तदाश्रयमनोनिरूपितं यदज्ञानं तदाश्रयकालपूर्वत्वशून्यत्वमित्यादिकं पूर्वमेवोक्तम्; मया ब्रह्म ज्ञातं न जीवन्मुक्तेनेति प्रतीतेर्नानाज्ञानपक्षे मनोविशेषस्याज्ञानविशेष निरूपकत्वं बोध्यमित्युपहितविषयकज्ञानस्य मोक्षहेतुतायामुक्तदोष इति तन्न, तुच्छविषयकविकल्पाख्यवृत्तेर्धीत्वाभावादेव निवर्तकत्वोपपत्तौ विशेष्यदलवैयर्थ्यात् । तुच्छाकारवृत्तेरसविषयकत्वमते स्वोपहितान्याविषयकत्वरूपसत्यन्ताभावादेव वारणात्तदर्थं विशेष्यदलोपादानस्यायुक्तत्वाच्च । किञ्च समानविषयकयोरेव ज्ञानाज्ञानयोर्निवर्त्यनिवर्तकभावस्य लोकसिद्धत्वाद्वृत्त्युपहितविषयकज्ञानस्याज्ञाननिवर्तकत्वं न सम्भवत्येव, भिन्नविषयकत्वात् । अज्ञानं हि शुद्धविषयकं वा स्वोपहितविषयकं वा, नत्वन्तःकरणवृत्तिविशेषोपहितविषयकम् "आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला। पूर्वसिद्धतमसो हि पश्चिमो नाश्रयो भवति नापि गोचरः" इत्युक्तरीत्या अज्ञानस्य स्वकार्योपहितविषयत्वासम्भवात् । उक्तकारिकायां विवरणादिमते केवलपदस्य शुद्धपरत्वाभाव

स्वपिमते अज्ञानकार्यानुपहितपरतया भवद्भिर्व्याख्यातत्वात् । नच वृत्तेरप्यज्ञान परिणामान्तःकरणपरिणामत्वादज्ञानरूपत्वमस्तीति समानविषयकत्वनिर्वाह इति वाच्यम्-तथासति घटादरप्यज्ञानकार्यत्वेन तदुपहितज्ञानस्यापि समान विषयकत्वेन निवर्तकत्वापत्तेः । नच वृत्त्युपहितविषयकत्वस्यैव विशिष्य निव र्तकतावच्छेदककोटौ निवेशान्न घटाद्युपहितज्ञानमादायातिप्रसङ्ग इति वाच्यम्; उभयोरप्यज्ञानसमानविषयकत्वाभावेन विनिगमनाविरहेण द्वयो रपि निवर्तकताया दुर्वारत्वात् ।

किञ्च शुद्धस्य वृत्तिविषयत्वाभावे शुद्धं स्वप्रकाशमिति वाक्यजन्य बोधेऽपि शुद्धत्वाभावात् शुद्धं स्वप्रकाशं नवेति संशयानिवृत्तिप्रसङ्गः ।

नतु धर्मितावच्छेदकतासम्बन्धेन तत्प्रकारकबुद्धिं प्रति विशेष्यता सम्बन्धेन तद्व्यापकीभूताभावप्रतियोगित्वनिश्चयस्य प्रतिबन्धकत्वमनुभव सिद्धम्, वह्न्यभावव्यापकीभूताभावप्रतियोगी धूम इति निश्चयस्योद्बुद्ध संस्कारस्य वा विशेष्यतासम्बन्धेन धूमे सत्त्वे धूमवान् वह्न्यभाववानित्याकार कज्ञानस्य धर्मितावच्छेदकतासम्बन्धेन धूमे अनुत्पादात्; एवमस्वप्रकाश त्वव्यापकीभूताभावप्रतियोगि अनुपहितत्वरूपशुद्धत्वमिति निश्चये उद्बुद्ध संस्कारे वा सति तदवच्छिन्नविशेष्यकास्वप्रकाशत्वप्रकारकबुद्धिर्न जायते, एवंच शुद्धं स्वप्रकाशमिति वाक्यस्य लक्षणया शुद्धत्वमस्वप्रकाशत्वव्यापकी भूताभावप्रतियोगित्वरूपस्वप्रकाशत्वनिरूपितव्यतिरेकव्याप्तिमदित्यर्थ इति तादृशवाक्यस्य शुद्धविशेष्यकास्वप्रकाशत्वसंशयानुत्पादप्रयोजकबोधजनकत्व रूपं शुद्धस्वप्रकाशत्वबोधकत्वमुपपन्नमिति-नच, उक्तबोधहेतुभूतशुद्धादिपद लक्षणाज्ञानस्य शुद्धस्य वृत्तिविषयत्वं विना असम्भवात्; लक्षणायाश्च शक्यसम्बन्धरूपत्वेन शक्यज्ञानाधीनज्ञानविषयत्वात् नच शुद्धस्वप्रकाशादि पदानां शुद्धत्वस्वप्रकाशत्वाद्युपहित एव शक्तिर्न शुद्ध इति न तज्ज्ञाना पेक्षेति वाच्यम्; एवमप्युपहितत्वाभावरूपशुद्धत्वस्याप्युपाधित्वेन शुद्धत्व

व्याघात इत्याशङ्क्य तादृशोपहितत्वाभावस्य ब्रह्मस्वरूपतया समाधानस्याद्वैतसिद्धिद्वितीयपरिच्छेदे प्रतिपादितत्वेन शुद्धत्वमस्वप्रकाशत्वव्यापकीभूताभावप्रतियोगीति व्याप्तिज्ञाने शुद्धस्यावश्यं ज्ञातव्यत्वात् ।

यद्यपि स्वीयधर्मितावच्छेदकतानिरूपिता या प्रतियोगितासम्बन्धावच्छिन्नावच्छेदकता तदवच्छेदकतासम्बन्धेन तद्वत्त्वबुद्धौ धर्मितावच्छेदकतासम्बन्धेन तद्व्यापकत्वज्ञानं प्रतिबन्धकम्, यथा वह्न्यभावविशिष्टे धूमवत्ताज्ञाने वह्निर्धूमव्यापक इति ज्ञानस्य वह्नित्वनिष्ठव्याप्त्या प्रतिबन्धकता, एवमुपाहितत्वमस्वप्रकाशत्वव्यापकमिति ज्ञानस्योपाहितत्वनिष्ठव्याप्त्या उपहितत्वाभाववदस्वप्रकाशमिति ज्ञानप्रतिबन्धकत्वादुपहितत्वाभावरूपशुद्धत्वस्याज्ञानेपि तत्सम्भवात्, उक्तवाक्यस्य उपहितत्वमस्वप्रकाशत्वव्यापकमित्यर्थकतया पूर्वोक्तसंशयानुत्पादप्रयोजकत्वमुपपन्नमिति तदपि न, अस्वप्रकाशत्वस्य स्वप्रकाशत्वघटितत्वेन स्वप्रकाशत्वस्य च ब्रह्मस्वरूपत्वेन शुद्धस्य वृत्त्यविषयत्वे निरुक्तव्याप्तिज्ञानस्यैवासम्भवात् । उक्तं चाद्वैतसिद्धौ स्वप्रकाशत्वलक्षणोपपत्तौ- "अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वात्यन्ताभावानधिकरणत्वं स्वप्रकाशत्वम्, न च मोक्षेऽव्याप्तिः, अनधिकरणत्वस्य स्वरूपतया तदापि सत्त्वात्; न च स्वरूपत्वे लक्षणत्वानुपपत्तिः? स्वरूपे ब्रह्माभिन्नानन्दादौ गुणत्वव्यवहारवत् स्वरूपभूतेप्यनधिकरणत्वे लक्षणत्वव्यवहारादि" ति । न च स्वव्यवहारे स्वातिरिक्तसंवित्सापेक्षत्वमेवास्वप्रकाशत्वम्, तदभावश्च स्वप्रकाशत्वरूपम्, तथा चोक्तास्वप्रकाशत्वव्यापकत्वज्ञाने न ब्रह्मज्ञानापेक्षेति वाच्यम्, एवमप्युपहितत्वस्यास्वप्रकाशत्वव्यापकत्वज्ञानार्थं शुद्धत्वस्वप्रकाशत्वयोस्सहचारज्ञानस्यापेक्षितत्वात् । अन्यथोपहितत्वाभाववद्वृत्त्यस्वप्रकाशत्वमिति व्यभिचारज्ञानानुच्छेदेनोक्तव्यापकताज्ञानासम्भवात । उक्तसहचारस्य शुद्धत्वघटितत्वेन तद्बुद्धेश्शुद्धत्वघटितत्वात् न च शुद्धस्य वृत्त्यविषयत्वेन तद्घटि

तद्व्यभिचाराकारवृत्तिसामग्र्या अकल्पनादेव नोक्तव्यभिचाराकारवृत्तिसम्भवः, यद्वा उपहिते शुद्धत्वभ्रमकाले उपहितरूपाधिकरणमादाय सहचारभ्रमसम्भवेनोक्तव्यापकत्वज्ञानं निराबाधमिति वाच्यम् ,– तथासति तादृशज्ञानसामग्र्या अकल्पनादेव शुद्धास्वप्रकाशत्वयोर्वैशिष्ट्यधीवारणे उक्तव्यापकताज्ञानस्योक्तधीप्रतिबन्धकस्य जनकं शुद्धं स्वप्रकाशमिति वाक्यमित्युक्तेर्वैयर्थ्यात् । उपहिते शुद्धत्वभ्रमाङ्गीकारे शुद्धत्वेनोपहितावगाहिनश्शुद्धत्वावच्छिन्नविशेष्यकस्वप्रकाशत्वप्रकारकबोधस्योक्तवाक्यजन्यत्वेपि तादृशसंशयनिवृत्तिनिर्वाहे तादृशवाक्यस्य लक्षणामङ्गीकृत्य शुद्धं स्वप्रकाशं न वेत्यादिसंशयानुत्पादप्रयोजकत्वाभिधानस्यानुचितत्वात् ।

यत्तु शुद्धं स्वप्रकाशमिति वाक्यस्य लक्षणया अशुद्धत्वं अस्वप्रकाशत्वव्यापकमित्यर्थ इति वदतामयमभिप्रायः– शुद्धविशेष्यकास्वप्रकाशत्वज्ञानस्याप्रसिद्ध्या तादृशज्ञानसामग्र्या अकल्पनादेव नोत्पत्तिः; धर्मितावच्छेदकतासम्बन्धेन घटत्वादौ प्रसिद्धस्यास्वप्रकाशत्वप्रकारकबोधस्य शुद्धत्वे उत्पत्तिप्रयोजकसामग्र्यास्सम्भवेपि नोत्पत्तिसम्भवः, उक्तप्रतिबन्धकज्ञानसत्त्वादिति ; तन्न, उक्तरीत्योपहितत्वाभावविशिष्टे स्वप्रकाशत्वाभावज्ञानवारणेपि स्वप्रकाशत्वं शुद्धवृत्ति न वेति संशयावारणात् । उक्तसंशयसामग्र्याः कल्पनं तादृशसंशयप्रतिबन्धकबोधस्योक्तवाक्यादनुत्पत्तेः ।

तस्माच्छुद्धस्यापि वृत्तिविषयत्वमवश्यमङ्गीकर्तव्यमिति तत्र वृत्तिव्याप्यत्वरूपहेतोर्व्यभिचारो दुर्वार । किञ्च सत्त्वत्ववादिमतरीत्या प्रमाणे व्यभिचारो दुर्वारः, यद्यनुमानं येन प्रयुज्यते तन्मतरीत्यैव व्यभिचारो दूषणं न प्रतिवादिरीत्येति सम्भवति, प्रतिवादिरीत्या व्यभिचारज्ञाने सत्यपि परेषां परामर्शदुष्टत्वेनानुमितेरसम्भवात् ।

यत्तूक्तं विवरणानुयायिभिः- शुद्धेपि वृत्तिविषयत्वमस्त्येव, "केवलो निर्गुण" इति श्रुत्या ब्रह्मणि परमार्थतो धर्मनिषेधेपि व्यावहारिकधर्माविरो धात्; अन्यथोपहितब्रह्मतादात्म्यस्य शुद्धेप्यवश्यं वाच्यत्वेनोक्तश्रुति बाधापत्तेः; ब्रह्मणस्स्वप्रकाशत्वेपि कल्पिताज्ञाननाशार्थं वृत्तिविषयत्वस्य युक्तत्वात्; किञ्च नस्वप्रकाशे चिदंशे अज्ञानम्— किंत्वानन्दांशे, तथाच तस्य शुद्धस्यापि वृत्तिविषयत्वमावश्यकम्; तदुक्तम्- "फलव्याप्यत्वमेवास्य शास्त्र कृद्भिर्निराकृतम्। ब्रह्मण्यज्ञाननाशार्थं वृत्तिव्याप्यत्वमिष्यत" इति; एवं च स्वमतेपि ब्रह्मणि व्यभिचारस्य निराबाधत्वात् तद्वारणाय शब्दाजन्यवृत्ति विषयत्वमेव हेतुः, तेन ब्रह्मणः श्रुतिजन्यशाब्दबोधात्मकवृत्तिविषयत्वेपि तद न्यमानस्य तत्राप्रवृत्तेर्न व्यभिचारः; एवं तुच्छेपि न व्यभिचारः, "शब्दज्ञानानुपाती वस्तुशून्यो विकल्प" इति पातञ्जलसूत्राच्छशविषा णादिशब्दैस्तुच्छव्यवहाराच्च तुच्छस्य शाब्दवृत्तिविषयत्वेपि तदतिरिक्त विषयत्वाभावादिति । तदयुक्तम्, ब्रह्मणस्सर्वज्ञत्वसत्यसङ्कल्पत्वादिगुण स्य श्रुत्यैकसमधिगम्यतया तत्रोक्तहेतोर्भागासिद्धेः । नच सर्वज्ञत्वादिकं ब्रह्मधर्मः- तथाश्रुतिबोध्यत्वादित्यनुमानेनापि वेद्यत्वान्न भागासिद्धिरिति वाच्यम्,- तथासति अनुभूतिः स्वप्रकाशा अनुभूतित्वादित्यादिस्वप्रका- शत्वादिसाधकैः जीवः परमात्मनो न भिद्यते चेतनत्वादित्यादिजीवब्रह्मा भेदसाधकैश्चानुमानै वेद्यत्वात् ब्रह्मणि व्यभिचारस्तदवस्थः । सन् घटोह मस्मि इत्यादिप्रत्यक्षेणापि वेद्यत्वाच्च । नचोपहितमेव प्रत्यक्षवेद्यम्, उप हितस्य भाने स्वरूपस्यापि भानावश्यकत्वात् । अन्यथा विशिष्टे निश्चि तेपि स्वरूपे संशयापत्तेः । नच विशिष्टज्ञानमेव शुद्धे संशयानिवर्तक मिति वाच्यम्,- अन्यज्ञानस्यान्यसंशयनिवर्तकत्वायोगात् । अन्यथा उपहितज्ञानादेव शुद्धेप्यज्ञाननिवृत्तिसम्भवेन शुद्धस्य वृत्तिविषयत्वाङ्गी कारवैफल्यात् । एवं तुच्छं वृत्तिविषयो व्यवह्रियमाणत्वात्- तुच्छं न क्षणिकमकारणत्वादित्याद्यनुमानवेद्यत्वेन तुच्छेपि व्यभिचारो दुर्वारः ।

यदपि-सत्तादात्म्यप्रकारकवृत्तिविषयत्वं हेतुः, ब्रह्मणि तुच्छे च सत्प्रतियोगिकत्वविशिष्टतादात्म्याभाव इत्युक्तरीत्या व्यभिचार इति । तन्न, सत्तादात्म्ये सत्तादात्म्याभावेन भागासिद्धेः । घटस्सन्निति वत् ब्रह्म सदिति प्रतीत्या सत्तादात्म्यप्रकारकवृत्तिविषयत्वस्य ब्रह्मणि व्यभिचारात्, तुच्छेऽपि शशविषाणं सदिति प्रतीत्या व्यभिचाराच्च ।

एतेन - सत्तादात्म्यतत्त्वान्यतरप्रकारकवृत्तिविषयत्वं हेतुः, अतस्सत्तादात्म्ये नासिद्धिरित्युक्तावपि न निस्तारः, सत्तादात्म्यतत्त्वान्यतरस्यैव हेतुत्वसम्भवेन शेषवैयर्थ्याच्च । तावन्मात्रस्य हेतुत्वमपि न युक्तम्; भवदभिमतसत्तादात्म्यस्योभयवाद्यसिद्धत्वेन हेतुत्वासम्भवात् । सत्तादात्म्यपदेन सत्ताजातेर्विवक्षणे सामान्यादौ, भावत्वस्य विवक्षणे चाभावे भागासिद्धेः । कालसम्बन्धित्वविवक्षणे च ब्रह्मणि व्यभिचारात् ।

यदपि - स्वसमानसत्ताकज्ञानविषयत्वमेव दृश्यत्वम्, ज्ञाने स्वसमानसत्ताकत्वनिवेशाद्ब्रह्मतुच्छयोर्न व्यभिचारः, स्वसमानसत्ताकत्वं च स्वानाशकज्ञाननाश्यत्वम्— तेन सत्तावैविध्यसिद्धेर्मिथ्यात्वसिद्ध्यनन्तरभावित्वेऽपि नान्योन्याश्रयः, तत्र ज्ञानपदोपादानाच्च घटादिज्ञानस्य कस्यचित् घटाद्यनाशकेन पटादिज्ञानेन नाश्यत्वेऽपि घटादौ नासिद्धिः, इच्छाऽव्यवहितपूर्वोत्पन्नघटादिज्ञानमादायैव हेतूपपादनात्; यादृशविषयविशेषविषयकज्ञानसामान्यमिच्छापूर्वमनुत्पन्नं तादृशविषयस्याप्रसिद्ध एव— सर्वस्यापि वस्तुन इच्छाऽव्यवहितपूर्ववर्तिनस्सर्वं प्रमेयमित्याकारकयत्किंचिज्ज्ञानविषयत्वात्; न च ब्रह्मणि प्रतिवादिरीत्या ब्रह्मानाशकज्ञाननाश्यज्ञानविषयत्वस्य सत्त्वात्सन्दिग्धव्यभिचार इति वाच्यम्,— स्वानाशकज्ञाननाश्यत्वेनाद्वैतमतसिद्धं यत्तदन्यज्ञानविषयत्वस्य विवक्षितत्वात्; ब्रह्माज्ञानसामान्यस्य ब्रह्मज्ञाननाश्यत्वेनाद्वैतमतसिद्धतया तदन्यज्ञानविषयत्वाभावात्; इत्थं च स्वनिष्ठनाशकतासम्बन्धावच्छिन्नप्रतियोगिताकाभाववज्ज्ञाननाश्यत्वप्रकार-

काद्वैतिसम्बन्धिज्ञानविषयत्वसम्बन्धावच्छिन्न स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवज्ज्ञानविषयत्वतादात्म्योभयसम्बन्धेन किञ्चिद्विशिष्टत्वं दृश्यत्वमिति फलितम्, तेन नाननुगमः, नवा घटादिकं स्वपदेनोपादाय ब्रह्मणि व्यभिचारः, तादात्म्यनिवेशादिति । तन्न, इच्छाऽव्यवहितपूर्वोत्पन्नब्रह्मज्ञानमादाय ब्रह्मणि व्यभिचारस्य दुर्वारत्वात् । नच स्वनिष्ठनाशकतासम्बन्धावच्छिन्नप्रतियोगिताकाभाववज्ज्ञाननाश्यस्वस्वोपादानान्यतरकत्वेनाद्वैतमतसिद्धं यत्तद्भिन्नज्ञानविषयत्वस्य विवक्षणान्न ब्रह्मणि व्यभिचारः, इच्छाव्यवहितपूर्वोत्पन्नब्रह्मज्ञानस्य ब्रह्मज्ञाननाश्यत्वविरहेपि तन्नाश्योपादानकत्वेनाद्वैतमतासिद्धतया तद्भिन्नत्वाभावादिति वाच्यम्; वृत्तेस्सूक्ष्मावस्थाहि तदुपादानम्, सैव च संस्कारः, तथाचेच्छाव्यवहितपूर्वोत्पन्नघटादिज्ञानसंस्कारस्य तदुपादानात्मकस्य घटादिस्मृत्या चरमस्मृत्या वा नाशाद्घटादावसिद्धिः, घटादिज्ञानस्य घटाद्यनाशकघटादिस्मृतिनाश्योपादानकत्वेनाद्वैतमतासिद्धतया तद्भिन्नत्वाभावात् । ब्रह्मज्ञानेन प्रपञ्चस्य नाशो न जन्यते किंतु प्रपञ्चात्यन्ताभाव एव ब्रह्मज्ञानप्रयुक्त इति मतसाधारण्यविरहाच्च ।

यदपि– स्वनिष्ठबाधकतासम्बन्धावच्छिन्नप्रतियोगिताकाभाववज्ज्ञानबाध्यत्वप्रकारकाद्वैतिसम्बन्धिज्ञानविषयत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवज्ज्ञानविषयत्वतादात्म्योभयसम्बन्धेन किञ्चिद्विशिष्टत्वमेव दृश्यत्वं विवक्षितम्, तादृशज्ञानबाध्यत्वं च तादृशज्ञानप्रयुक्तस्वस्वोपादानान्यतरत्वावच्छिन्नाभावकत्वम्, तथाच घटादिज्ञानोपादानत्वावच्छिन्नाभावस्य ब्रह्मज्ञानमात्रप्रयुक्तत्वात्तस्य घटाद्यबाधकत्वविरहेण स्वाबाधकं शुक्त्यादिज्ञानमेव, तद्बाध्यत्वप्रकारकाद्वैतिसम्बन्धिज्ञानविषयभिन्नं च घटादिज्ञानमिति नासिद्धिरिति । तदपि न, सर्वं ज्ञानं शुक्तिज्ञानबाध्यमित्यद्वैतिनो भ्रमसम्भवेन तदीयविषयताबास्सकलज्ञानसाधारण्य

ताद्दशज्ञानविषयत्वसम्बन्धावाच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदस्य ज्ञानाप्रसिद्धया स्वपदेन घटादेरुपादानासम्भवादसिद्धेः । अद्वैतिसम्बन्धिप्रमाविषयत्वनिवेशे च सान्दिग्धासिद्धेः, अद्वैतिनस्ताद्दशबाध्यत्वप्रकारकज्ञाने प्रमात्वस्योभयवाद्यसिद्धत्वात् ।

अथ याद्दशाद्वैतिव्यक्तेरेताद्दशभ्रमो न प्रसिद्धयति ताद्दशाद्वैतिव्यक्तेरेव तद्व्यक्तित्वेन निवेशान्न दोषः; नच ताद्दशव्यक्तेरप्रसिद्धिरेव, सर्वेषामेव चेतनानामयोग्यताज्ञानविरहदशायां सर्वं ज्ञानं शुक्तिज्ञानबाध्यमिति वाक्याद्बोधस्य दुर्वारत्वात्, अयोग्यताज्ञानजन्यसंस्कारस्य प्रतिबन्धकत्वेपि यद्रूपावच्छिन्नधर्मिकमयोग्यताज्ञानं संस्कारो वा तदन्यरूपावच्छिन्नधर्मिकबोधस्य शब्दाद्दुरपह्नवत्वादिति वाच्यम्, — याद्दशकालावच्छेदेन यद्व्यक्तेरेताद्दशभ्रमो नास्ति ताद्दशकालावच्छिन्नतत्पुरुषीयबाध्यत्वप्रकारकज्ञाननिवेशनादोषादिति चेत्? मैवम्, परार्थानुमाने तदादिशब्देन निर्देशस्यासाम्प्रदायिकत्वात् । स्वनिष्ठबाध्यत्वप्रकारकाद्वैतिसम्बन्धिज्ञानविषयत्वतादात्म्योभयसम्बन्धेन किञ्चिद्विशिष्टत्वस्यैव हेतुत्वसम्भवेनेतरांशस्य वैयर्थ्याच्च । तथाहि— नीलधूमत्वादिवारणाय व्याप्यतावच्छेदकधर्मान्तराघटितस्यैव व्याप्यतावच्छेदकत्ववद्धेतुतावच्छेदकसम्बन्धतावच्छेदकान्तराघटितस्यैव हेतुतावच्छेदकसम्बन्धतावच्छेदकत्वनियमस्य काकदन्तखगानकालीनज्ञानविषयसंयोगत्वादीनां ताद्दशसम्बन्धतावच्छेदकत्ववारणायावश्यं स्वीकरणीयतया निरुक्तताद्दशोभयत्वस्य बाध्यत्वप्रकारकाद्वैतिसम्बन्धिज्ञानविषयतात्वरूपलघुधर्मघटितत्वेन ताद्दशसम्बन्धतावच्छेदकत्वासम्भवाद्व्याप्यत्वासिद्धिरधिकोक्तिर्वा निग्रहस्थानमिति । नच स्वसमानाधिकरणव्याप्यतावच्छेदकान्तराघटितस्यैव व्याप्यतावच्छेदकत्ववत्स्वसमानाधिकरणहेतुतावच्छेदकसम्बन्धतावच्छेदकान्तरघटितस्यैव हेतुतावच्छेदकसम्बन्धतावच्छेदकत्वनियमस्वीकारेपि न दोषः, ताद्दशज्ञानविषयत्वतादात्म्योभयत्वसामानाधिकरण्यस्यो

क्ताद्वितिसम्बन्धिज्ञानविषयत्वे अभावेन निरुक्तोभयत्वे तादृशसम्बन्धतावच्छेदकघटितत्वस्याकिञ्चित्करत्वादिति वाच्यम्,— प्रथमनियमे स्वसामानाधिकरण्यनिवेशस्या साम्प्रदायिकतया भवतैवोक्तत्वात् । उक्तं हि लघुचन्द्रिकायां--- " ईश्वरवादपक्षधरीये तादृशधर्मान्तरघटितत्वेन हेतुतावच्छेदकं विशेषणीयमित्युक्तम्, तत्र तादृशपदं साध्यसम्बन्धितावच्छेदकपरम्, पूर्वग्रन्थे तस्यैव प्रक्रान्तत्वात्, तथाच स्वसामानाधिकरण्यनिवेशस्य तान्त्रिकसम्प्रदायासिद्धत्वात् स्वकपोलकल्पितत्वं निर्युक्तिकत्वं च" ति एवंच द्वितीयनियमेपि स्वसामानाधिकरण्यानिवेशादुक्तोभयत्वस्य हेतुतावच्छेदकसम्बन्धतावच्छेदकत्वं न सम्भवतीति । एवं येन सम्बन्धेन यत्र यत्सम्बध्यते तत्र तत्सम्बन्धावच्छिन्नतदभावमङ्गीकुर्वतां स्वपदेन घटाद्युपादानेपि बाधकतासम्बन्धेन घटाभाववज्ज्ञानं ब्रह्मज्ञानमपीति तद्बाध्यज्ञानाप्रसिद्धिः । समानाधिकरणप्रतीतिस्थले भेदाभेदोभयभानाङ्गीकारेण ब्रह्मज्ञानबाध्येपि तद्भेदोपपादने च ब्रह्मणि व्यभिचारो दुर्वारः । भेदासहिष्णुतादात्म्यस्य भवद्भिरनङ्गीकारेण हेत्वप्रसिद्धिश्चेत्यलं पल्लवितेन ।

यदपि— वृत्तिविषयत्वमेव दृश्यत्वम्; नच शुद्धे ब्रह्मणि व्यभिचारः, वृत्तिनिरूपितनिरवच्छिन्नविषयताया एव विवक्षितत्वात्; शुद्धे च वृत्तिविषयताया वृत्त्युपहितावच्छिन्नवृत्तिकतया न व्यभिचारः; नचैवं वियदादिनिष्ठाया विषयताया अपि वियत्त्वाद्यवच्छिन्नत्वेन स्वरूपासिद्धिरिति वाच्यम्,-सप्तमीनिर्देश्यं यद्विलक्षणं दैशिकावच्छेदकत्वं तदनिरूपकत्वरूपनिरवच्छिन्नत्वस्य वियदादिनिष्ठायां विषयतायां अप्रत्यूहत्वात्; नच वियदादाविव ब्रह्मण्यपि वृत्तिविषयतानवच्छिन्नेति वाच्यम्,- " यद्यदद्रेश्यमि " ति श्रुतिस्वारस्याद्ब्रह्मनिष्ठविषयताया अव्याप्यवृत्तित्वाभ्युपगमात्; नच विषयतासामान्यवाचिनः कर्मप्रत्ययस्यानवच्छिन्नविषयतापरत्वेपि श्रुतेर्यथाश्रुतार्थपरत्वरूपं स्वारस्यं न निर्वहतीति वाच्यम्,- प्रथमश्रुतद्यपि

धातोस्साकल्यविषयकदृष्टिरूपगुरुधर्मावच्छिन्नलक्षणामपेक्ष्य जघन्यप्रत्ययस्यैव विलक्षणावच्छेदकत्वानिरूपकविषयतात्वरूपलघुधर्मावच्छिन्ने लक्षणाया एवाभ्युपगन्तुं युक्तत्वादिति । तन्न, घटाद्यवच्छिन्नचैतन्यनिष्ठविषयतायाः घटाद्यवच्छेदेन प्रसृतान्तःकरणवृत्तिनिरूपितायाः घटाद्यवच्छिन्नत्वेन निरवच्छिन्नवृत्तिविषयत्वाभावेन भागासिद्धेः । नच प्रत्यक्षस्थले वृत्तेः प्रसरणाङ्गीकारेण तादृशवृत्तेर्घटाद्यवच्छिन्नतया तद्विषयतायास्तदवच्छिन्नत्वसम्भवेपि परोक्षवृत्तेर्न तदवच्छिन्नत्वमिति तद्विषयतामादाय हेतूपपादनसम्भव इति वाच्यम्,— तथासति ब्रह्मण्यपि परोक्षवृत्तिविषयतायाः किञ्चिदवच्छिन्नत्वस्याप्रामाणिकतया व्यभिचारस्य दुर्वारत्वात् । अन्यथा शुद्धे विषयता वृत्त्युपहितावच्छेदेन घटाद्यवच्छेदेन शरीराद्यवच्छेदेन वा जायत इत्यत्र विनिगमनाविरहेणानन्तावच्छेदकताव्यक्तिकल्पनाप्रसङ्गात् । दृश्यत्वस्यापि मिथ्यात्वेनैवावच्छेदकभेदं विनैव तदभावोपपत्त्या ब्रह्मणि विषयताया निरवच्छिन्नत्वेपि "यत्तदद्रेश्यमि" ति श्रुत्युपपत्तेस्तत्र लक्षणाकल्पनस्य युक्तत्वात् । अन्यथा " नेह नानास्ती " त्यादावपि लक्षणाप्रसङ्गात् । किंच- घटादाविव ब्रह्मण्यपि निरवच्छिन्नविषयताया उत्पत्तिवारणाय कस्यचित्प्रतिबन्धकतायाः अवच्छेदकतासम्बन्धेन ब्रह्मनिष्ठविषयतां प्रति तादात्म्यसम्बन्धेन विनिगमनाविरहेण बहूनां हेतुतायाश्च कल्पनीयतया महागौरवञ्च । एवंरीत्या किञ्चिदवच्छिन्नत्वकल्पनेपि सत्यत्ववादिरीत्या व्यभिचारो दुर्वार एवेति ।

एतेन— स्वानतिरिक्तविषयकज्ञानाबाध्यवृत्तिविषयत्वमेव दृश्यत्वम्; स्वपदं यस्मिन् दृश्यत्वमुपपादनीयं तत्परम्; ब्रह्मविषयकवृत्तेश्च ब्रह्मातिरिक्तविषयकज्ञानबाध्यत्वान्न तत्र व्यभिचारः; यद्वा सत्यादिपदतात्पर्यविषयाविषयकवृत्तिविषयत्वं दृश्यत्वम्, अतो न कोपि दोष इति निरस्तम्,

भवन्मते घटादिविषयकज्ञानसामान्यस्य तदवच्छिन्नचैतन्यविषयकत्वेन घटादेस्स्वपदेनोपादाने तदनतिरिक्तविषयकज्ञानाप्रसिद्ध्या हेत्वसिद्धेश्च । नच स्वभिन्नं यच्चिद्भिन्नं तदविषयकत्वमेव स्वानतिरिक्तविषयकत्वमतो नासिद्धिरिति वाच्यम्,— एवमपि घटादिज्ञानस्य घटत्वादिविषयकत्वेन शुक्तिरूप्यादिज्ञानस्य च शुक्त्वादिविषयकत्वेनासिद्धेस्साधनवैकल्यस्य च दुर्वारत्वात् । दृष्टान्तपक्षसाधारणानुगतस्वत्वाभावेन हेतोरुभयसाधारण्यानुपपत्तेश्च । नच स्वबाधकज्ञानविषयत्वसम्बन्धावच्छिन्न स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्वविषयत्वोभयसम्बन्धेन वृत्तिविशिष्टत्वमेव तथेति नाननुगम इतिवाच्यम्,— अहं ब्रह्मास्मि घटो विनाशीत्यादिसमूहालम्बनस्यापि प्रपञ्चबाधकतापक्षे घटादावसिद्धेः, घटादिज्ञानस्य स्वपदेनोपादाने तद्बाधकचरमवृत्तिविषयत्वस्य घटादौ सत्त्वात् । नच स्वबाधकतावच्छेदकविषयत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदनिवेशान्नोक्तासिद्धिः, समूहालम्बनज्ञानस्य बाधकत्वेपि घटादिविषयकत्वेन तथात्वाभावेन घटादिविषयताया बाधकतानवच्छेदकत्वादिति वाच्यम्,— प्रपञ्चाधिकरणकालपूर्वत्वाभावरूपे भवन्मतसिद्धबाधकत्वे ब्रह्मविषयताया अवच्छेदकत्वं न घटादिविषयताया इत्यस्य वक्तुमशक्यत्वात् । शुक्तीः रजतं नेत्यादिज्ञाननिष्ठबाधकतावच्छेदककोटौ शुक्तिरूप्यविषयताया अपि प्रविष्टत्वेन दृष्टान्ते साधनवैकल्याच्च । नच स्वबाधकज्ञानवृत्तित्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताभेदस्य निवेशान्न साधनवैकल्यम्, वृत्तित्वं च स्वानतिरिक्तविषयकत्वसम्बन्धेन, एतदर्थमेव हेतौ स्वविषयकज्ञानाबाध्येति विहाय स्वानतिरिक्तविषयकज्ञानाबाध्येत्युक्तमिति वाच्यम्,— तथासति समूहालम्बनस्य बाधकतापक्षे स्वपदेन घटादिगोचरवृत्तेरुपादाने निरुक्तसम्बन्धेन स्वविशिष्टात्मकप्रतियोग्यप्रसिद्ध्योक्तभेदाप्रसिद्धेः । असद्भेदमादाय हेतूपपादने च ब्रह्मणि व्यभिचारस्य दुर्वारत्वात् (नचासमूहालम्बनज्ञान

स्यापि बाधकस्य सत्त्वात्तत्र ब्रह्मणि वृत्तेर्न व्यभिचार इति वाच्यम् ,– नाना ज्ञानपक्षे यत्पुरुषीयाज्ञानकल्पितं जगत्समूहालम्बनेनैव बाधितं तदीयज्ञान विषयत्वस्य ब्रह्मणि सत्त्वेन व्यभिचारात् । पुरुषान्तरीयासमूहालम्बन ज्ञानस्य चैतत्पुरुषीयज्ञानबाधकत्वाभावात् )

यद्वेत्यादिकमपि न युक्तम् ; सत्यादिपदतात्पर्यविषयताया ब्रह्मणि सत्त्वेन तदविषयकवृत्तिविषयत्वस्य भवन्मते घटादावभावेनासिद्धेः । नच घटादिज्ञाने घटाद्यवच्छिन्नचैतन्यस्य भानेपि शुद्धस्याभानान्नासिद्धिः, शुद्ध स्यैव सत्यादिपदतात्पर्यविषयत्वादिति वाच्यम् ,-- ब्रह्मऽव्यतिरिक्तमिथ्यात्व निश्चयं विना शुद्धे तत्पदतात्पर्यस्य निश्चेतुमशक्यत्वेन अन्योन्याश्रयात् । यदपि फलऽव्याप्यत्वमेव दृश्यत्वम्, फलं च स्वावच्छिन्नवृत्तिप्रतिबिंबिता वृत्त्यु परक्तस्वप्रतिबिंबिता वा चित् , तद्व्याप्यत्वं च तत्तादात्म्यम्, शरीरव्यापकस्या न्तःकरणस्य नेत्रादिद्वारा बहिर्निर्गत्य घटादिविषयदेशं गतस्य तत्तदाकारायाः वृत्तेरतिस्वच्छत्वेन प्रतिबिंबोत्पत्तियोग्यत्वात् , घटादेरस्वच्छत्वेपि स्वच्छ वृत्तिसम्बन्धेन प्रतिबिंबोत्पत्तियोग्यत्वसम्भवात् , स्वतः प्रतिबिंबोत्पत्त्य योग्याया अपि भित्तेर्जलादिसम्बन्धेन तद्योग्यत्वदर्शनात् , द्वितीयकल्पो प्युपपन्न इति । तन्न, नित्यातीन्द्रिये गुरुत्वादौ भागासिद्धेः, परोक्षवृत्तौ प्रतिबिंबसम्भवेपि तादृशवृत्तेर्विषयदेशप्राप्त्यभावेन स्वावच्छिन्नवृत्तिप्रति बिंबितचित्तादात्म्यस्य वृत्त्युपरक्तस्वप्रतिबिंबितचित्तादात्म्यस्य वा अभावात् ।

यदपीश्वरीयायां मायापरिणामरूपायां विद्यमानसर्वविषयिकायां वृत्तौ प्रतिबिंबितस्य चैतन्यस्य गुरुत्वादिकं सर्वं विषय इति न भागासिद्धिः, उक्तं हि विवरणे " ईशस्य सर्वकर्तृत्वादेव विद्यमानसर्वविषयज्ञते" ति ; उक्तं च तत्र तत्वदीपे " ईश्वरोपाधिस्सत्वप्रधानं माया विद्यमानसर्वविषया कारेण परिणमते, तस्मिंश्च परिणामे प्रतिबिंबितं चैतन्यं सर्वं पश्यत्याध्यासिक सम्बन्धा " दिति; एवं च सुखदुःखादौ शुक्तिरूप्यादौ च वृत्तेरस्वीकारेपि

न भागासिद्धिसाधनवैकल्ये इति । तदपि न, फलपदस्य प्रमाफलार्थकत्वा दीश्वरीयमायावृत्तेश्च प्रमात्वाभावेन तत्प्रतिबिम्बितचितः फलशब्दार्थत्वा भावात् । येन हि पुरुषेण यदज्ञातं तत्पुरुषीयतद्विषयवृत्तेः प्रमात्वादीश्वरेण चाज्ञातस्य कस्याप्यभावेन तदीयमायावृत्तेः प्रमात्वाभावात् । यदि च फलशब्दार्थमपहायेश्वरवृत्तिसाधारण एव हेतुरुच्यते तदा उक्तभागासिद्ध्य भावेपि सन्दिग्धासिद्धिर्व्याप्यत्वासिद्धिश्च दुर्वारा, द्वैतवादिमते स्वाकारक वृत्तिप्रतिबिम्बितचितोनङ्गीकारात्, चित्तादात्म्यमात्रस्य हेतुत्वसम्भवेन प्रति बिम्बितान्तवैयर्थ्यात । किंच नीरूपस्य निरवयवस्य चैतन्यस्य निरूपाया मन्तःकरणवृत्तौ प्रतिबिम्बाङ्गीकारोपि न युक्तः, गगने कालादिप्रतिबिम्ब वदसम्भावितत्वात् । नच जपाकुसुमरूपस्य नीरूपस्य निरवयवस्यापि स्फटि-कादौ प्रतिबिम्बदर्शनात् सावयवस्य सरूपस्यैव प्रतिबिम्ब इति न नियम इति वाच्यम् ,-- एवमपि चाक्षुषस्यैव चाक्षुषे प्रतिबिम्ब इति नियमस्याव्या-हतत्वेनोक्तस्थले प्रतिबिम्बासम्भवात् । नच शब्दस्याचाक्षुषस्य प्रतिशब्दा ख्यप्रतिबिम्बोपलम्भादचाक्षुषस्याकाशस्य जलादौ प्रतिबिम्बदर्शनाच्च नायमपि नियम इति वाच्यम् ,-- शब्दस्य द्रव्यत्वपक्षे पटहपयोनिधिप्रभृतिशब्दाभि घातेनान्यत्र शब्दान्तरोत्पत्तावपि तत्र बिम्बप्रतिबिम्बभावाव्यवहारात् । शब्द स्याद्रव्यत्वपक्षे ऽप्यभिव्यञ्जकवाय्वभिघातेन शब्दान्तरोत्पत्तेः । आकाशस्य च पञ्चीकरणप्रक्रियया रूपवत्त्वेन चाक्षुषत्वात् ।

यदपि— फलव्याप्यत्वं स्वावच्छिन्नविषयकाज्ञानभङ्गविशिष्टचिद्विषयत्व मेव, वृत्तेरावरणभङ्गार्थत्वस्वीकारात् , यत्र विषयत्वं व्याप्यं तदेव स्वमिति । तदपि न, नित्यातीन्द्रिये गुरुत्वादौ भागासिद्धेः, आवरणभङ्गविशिष्टचितः प्रत्यक्षवृत्तिफलत्वात् । आवरणं हि द्विविधम्- असत्त्वापादकमभानापादकं च । तत्राद्यस्य परोक्षापरोक्षसाधारणनिश्चयेन नाशेपि द्वितीयस्यापरोक्षवृत्त्यैव नाशात् । साक्षिभास्ये सुखादौ भागासिद्धेश्शुक्तिरूप्यादौ साधनवैकल्याच्च,

साक्षिभास्यस्याज्ञानानवच्छेदकत्वेन स्वावच्छिन्नचिद्विषयकाज्ञानाप्रसिद्धेः । चिद्विषयत्वमात्रस्य हेतुत्वसम्भवेनेतरांशवैयर्थ्यादुक्तहेतोरुभयवाद्यसिद्धत्वेन सन्दिग्धासिद्धेश्च ।

यदपि– वृत्तिव्याप्यफलव्याप्ययोरन्यतरत्वमेव दृश्यत्वम्, अन्यतरत्वं च तदुभयमुख्यविशेष्यकं यज्ज्ञानं तन्मुख्यविशेष्यत्वम्; तद्व्यक्तित्वेन ज्ञानस्य निवेशः, तेन वृत्तिव्याप्यत्वस्यैव हेतुत्वसम्भवेनान्यवैयर्थ्यमित्यपास्तम्; यद्वा कदाचित् कथंचित् धीविषयत्वं किञ्चित्कालावच्छिन्नमावृतानावृतचिद्विषयत्वरूपं दृश्यत्वम्; अत्र चित्तादात्म्यमेव हेतुः, दैशिकसम्बन्धेन हेतुमत्तालाभायावच्छिन्नान्तम्, कालिकसम्बन्धेन हेतुत्वे चाविद्यादिष्वनादिपदार्थेषु भागासिद्धिरिति । तन्न, वृत्तिव्याप्यत्वस्योक्तरीत्या ब्रह्मादौ व्यभिचरितत्वेन उक्तान्यतरत्वस्यापि तत्र व्यभिचारात् । न्यायप्रयोगे तदादिपदप्रयोगस्यासाम्प्रदायिकत्वाच्च । यद्वेत्यादिकमपि न युक्तम्, चित्तादात्म्यस्य ब्रह्मणि व्यभिचारात् । चित्प्रतियोगिकत्वविशिष्टतादात्म्याधिकरणत्वस्य हेतुत्वेऽपि तादृशस्य प्रातिभासिकस्य ब्रह्मणि सम्भवेन व्यभिचारात् । प्रातीतिकान्यस्य चित्तादात्म्यस्य हेतुत्वे च दृष्टान्ते साधनवैकल्यात् । हेतोरुभयवाद्यसिद्धत्वेन सन्दिग्धासिद्धेश्च । नच चिदवृत्तित्वविशिष्टतादात्म्यत्वेन हेतुत्वाङ्गीकारान्न कोऽपि दोष इति वाच्यम्,– चिदवृत्तित्वविशिष्टतादात्म्यस्यापि ब्रह्मणि भ्रमसम्भवेन तादृशप्रातिभासिकोत्पत्त्या व्यभिचारस्य दुर्वारत्वात् । भवदभिमततादात्म्यस्योभयासिद्धत्वेन सन्दिग्धासिद्धेश्च ।

यदपि– स्वातिरिक्तचित्प्रयोज्यस्वव्यवहारकत्वं दृश्यत्वम्; घटोऽपरोक्ष इत्याकारके घटविशेष्यकापरोक्षत्वव्यवहारे अनावृतचितस्तादात्म्येन हेतुत्वात् घटादावपरोक्षत्वस्यानावृतचित्तादात्म्यरूपत्वात्, व्यवहारे व्यवहर्तव्यस्य प्रयोजकतायास्सर्वसिद्धत्वात्, नित्यातीन्द्रिये अस्तित्वव्यवहारस्यासत्त्वापादकाज्ञानशून्यचित्प्रयोज्यत्वादुक्तचित एवास्तित्वरूपत्वात्, सुखादौ

साक्षिभास्ये प्रत्यक्षत्वव्यवहारस्य च साक्षिचित्सापेक्षत्वादैन्द्रियकातीन्द्रिय साक्षिभास्येषु हेतुसत्त्वमुपपन्नम् ; नचैवं शुद्धे व्यभिचारः, तत्राप्यस्तित्व व्यवहारेऽसत्त्वापादकाज्ञानशून्यचितस्तादात्म्येन कारणत्वात् , अन्यथा तादृशव्यवहारं प्रति निरुक्तचितः कारणतायां व्यभिचारापत्तेः उक्तविशेषण विशिष्टचितश्च शुद्धचिद्भिन्नतया शुद्धचिति तादात्म्यसम्भवादिति वाच्यम् ;– स्वातिरिक्तचित्प्रयोज्यस्वव्यवहारसामान्यकत्वस्य विवक्षितत्वात् , व्यवहार शब्देनासत्त्वापादकाज्ञानाविषयत्वप्रयोजकविशिष्टचिद्रूपस्फुरणशब्दप्रयोगप्रवृ त्त्यादीनां परिग्रहात्; स्वगोचरस्फुरणाद्यन्यतमत्वव्यापकस्वातिरिक्तचित्प्रयोज्य ताकत्वे पर्यवसानात् शुद्धगोचरनिरुक्तस्फुरणरूपव्यवहारे स्वातिरिक्तचित्प्र योज्यत्वाभावेनादोषात् ; घटादेर्निरुक्तस्फुरणं शुद्धचिदपेक्षम्, शुद्धचिज्जन्य मनोवृत्त्या ऽसत्त्वापादकाज्ञाननिवृत्तेः- उक्तविशिष्टचिद्रूपस्फुरणस्य शुद्धचिति कल्पितत्वेन तदाश्रितत्वाच्च, शुद्धचिद्विषयकोक्तस्फुरणस्य शुद्धचिदपेक्षितत्वेपि सा न ब्रह्मातिरिक्ता, ब्रह्मभिन्नसामान्यस्याविद्याप्रयोज्यत्वेन स्वातिरिक्तप्रयोज्य स्फुरणकत्वस्यापि शुद्धे सत्त्वाद्यभिचार इति चित्पदम्; अत्र स्वातिरिक्तचित्प्रयो ज्यस्फुरणकत्वं लघुहेतुर्बोध्य इति । तन्न, ब्रह्मविषयकशाब्दबोधात्मकनिरुक्त स्फुरणस्य स्वातिरिक्तपदज्ञानादिरूपचित्प्रयोज्यत्वेन उक्तहेतोरपि ब्रह्मणि व्यभिचारात् । (नचानादिस्फुरणं ब्रह्मणस्स्वातिरिक्तचिदप्रयोज्यमेव, पूर्णा नन्दांशे उक्ताज्ञाननिवृत्तेस्तदाकारवृत्त्यधीनत्वेपि चिदंशे ऽसत्त्वापादकाज्ञान विषयत्वाभावस्यानादित्वात् ; शुद्धचितोऽज्ञानाविषयत्वे नित्यसिद्धे वृत्तेरप्रयो योजकत्वेप्यज्ञानाविषयत्वविशिष्टचित एव तत्र क्षेमसाधारणप्रयोजकत्वात् शुद्धचितस्तद्विशिष्टत्वेन स्फुरणत्वादिति वाच्यम् ; — तस्यापि स्वातिरिक्त जीवचित्प्रयोज्यत्वात् । अन्यथा चैत्रस्य स्फुरतीत्यादिव्यवहारानुपपत्तेः ) निरुक्तस्फुरणादिघटितहेतोरुभयवाद्यसिद्धत्वेन सन्दिग्धासिद्धेश्च । किंच आवरणसामान्याभावश्चित्तादात्म्यस्यापरोक्षपदार्थत्वमपि न युक्तम् , घटादि

विषयकचाक्षुषादिकाले घटोऽपरोक्ष इत्यादिव्यवहारस्यानुभवसिद्धस्यानुपपत्तेः; तद्दशायामपि घटाधिष्ठानब्रह्मचैतन्यस्य मूलाज्ञानेनावृतत्वात् । नचावरणानवच्छेदकत्वरूपानावृतत्वविशिष्टश्चित्सम्बन्ध एवापरोक्षत्वम्, घटचाक्षुषादिकाले घटादिचित्सम्बन्धस्यावरणानवच्छेदकत्वात्, जन्यमात्रे जीवस्योपापादनत्वपक्षे घटादिभिर्जीवस्याध्यासिकोपरागसत्त्वेऽप्यावरणाभिभवार्थं ब्रह्मण उपादानत्वे तूक्तोपरागार्थमावरणभङ्गार्थं च वृत्तिरिति स्वीकारेण घटादिचाक्षुषादिवृत्त्या घटादिचित्तादात्म्यावच्छेदेन अज्ञाननाशान्नोक्तानुपपत्तिरिति वाच्यम्, — तथाप्येकाज्ञानपक्षे घटादिचाक्षुषवृत्त्या अज्ञाननिवृत्तिस्वीकारे सद्यो मोक्षापत्तेस्तत्पक्षे चित्सम्बन्धे आवरणानवच्छेदकत्वासम्भवात् । नच तत्पक्षे प्रमाविरहविशिष्टं यदज्ञानाविषयतावच्छेदकत्वं तदभावविशिष्टश्चैतन्यसम्बन्ध एवापरोक्षता, सुखादिचित्सम्बन्धे अज्ञानविषयतावच्छेदकत्वस्यैवाभावेन घटादिचित्सम्बन्धे च अज्ञानविषयतावच्छेदकत्वसत्त्वेपि तत्र प्रमाविरहरूपविशेषणाभावेन विशिष्टाभावसत्त्वादुभयत्राप्यपरोक्षव्यवहारनिर्वाह इति वाच्यम्;– एवं सति प्रमाविरहाद्यनुपस्थितिदशायां सुखादावपरोक्षव्यवहारानुपपत्तेः । नच प्रमावच्छेदकत्वाभावविशिष्टं यत्स्वविषयतावच्छेदकत्वं तत्सम्बन्धावच्छिन्नप्रतियोगिताको यो ऽज्ञानाभावस्तद्विशिष्टं चित्तादात्म्यमपरोक्षता, चाक्षुषादिप्रमाकाले तस्यानियमेन घटादिनिष्ठचित्तादात्म्ये प्रमावच्छेदकत्वस्यैव सत्त्वेन तदभावविशिष्टावच्छेदकत्वसम्बन्धावच्छिन्नाज्ञानाभावस्त्वात्तत्काले ऽपरोक्षताव्यवहारनिर्वाहः, उक्तविशिष्टस्य सम्बन्धत्वाच्च प्रमाविरहाद्यनुपस्थितिदशायामप्युक्तव्यवहारनिर्वाहः, सम्बन्धानुपस्थितावपि क्षतिविरहादिति वाच्यम्;– निरुक्तचित्तादात्म्यस्य उक्तव्यवहारे प्रवृत्त्यादौ च कारणत्वापेक्षया लौकिकविषयताकप्रत्यक्षत्वेन कारणत्वे लाघवात् । नच भवन्मते ऽप्रामाण्यज्ञानास्कन्दितसाक्षात्कारकाले प्रवृत्त्यादिवारणायाप्रामाण्यज्ञानानास्कन्दितत्वस्य प्रवृत्त्यादिजनकता

वच्छेदककोटौ निवेशावश्यकतया गौरवम् , अस्मन्मते चाप्रामाण्यज्ञानादि सत्त्वे ऽज्ञानस्यैव सत्त्वेन नोक्तविशिष्टचित्तादात्म्यमस्तीति वाच्यम् ;- एव मप्यज्ञाननाशं प्रत्युक्तप्रमाया हेतुत्वस्य तदवच्छेदककोटावप्रामाण्यज्ञाना भावस्य च निवेशनीयतया भवन्मते महागौरवात् । एवमसत्त्वापादकाज्ञान शून्यचितोऽस्तित्वरूपत्वमप्यनुचितम् , तथा सत्यस्ति स्फुरतीत्यनयोरेकार्थक त्वेन घटो मे स्फुरतीतिवद्घटो मेऽस्तीत्यादिव्यवहारापत्तेः । चैत्रस्य स्फुरति न मैत्रस्येतिवच्चैत्रस्यास्ति न मैत्रस्येत्यादिव्यवहारापत्तेश्च । परन्तु काल सम्बन्धित्वमेव- अस्तित्वमिति युक्तम् । व्यवहारे व्यवहर्तव्यस्य हेतुत्वमपि न युक्तम् , व्यवहर्तव्यस्य सत्त्वेपि तदज्ञानदशायां व्यवहारानुत्पत्तेः नच व्यव हर्तव्यज्ञानं व्यवहारहेतुरिति वाच्यम् ,- शुकादिव्यवहारे व्यभिचारादिति । एतेन स्वातिरिक्तचित्सापेक्षस्फुरणकत्वं दृश्यत्वमिति निरस्तम् , उक्तरीत्या ब्रह्मणि व्यभिचारात् । हेतोरुभयासिद्धत्वाच्च ।

यदपि- अस्वप्रकाशत्वमेव दृश्यत्वम् , स्वप्रकाशत्वं च स्वान्यचिदनपेक्षा परोक्षकत्वम् , चिदंशनिष्ठस्यापरोक्षत्वस्य स्वान्याविद्यापेक्षत्वाच्चिदिति विशे- ष्योपादानम् , आनन्दांशस्य च स्वान्यचिदंशाधीनापरोक्षताकत्वान्न स्व- प्रकाशत्वम् ; नच चिदंशेऽप्युक्तलक्षणस्यासम्भवः, स्वान्यचिदप्रसिद्धेरिति वाच्यम् ,- स्वान्यत्वाभावविशिष्टा स्वनिष्ठापरोक्षत्वापेक्षणी याचित्तस्य तत्त्वं— स्वप्रकाशत्वम्- स्वापरोक्षत्वापेक्षणी या चिदनन्या भवति तत्त्वं तदिति यत्स्वपदाभ्यां स्वपदयत्पदाभ्यां चैका वृत्तिर्माह्येति । तत्र, शुद्धगतानन्दांशस्यास्वप्रकाशत्वे तत्र व्यभिचारस्य दुर्वारत्वात् । तस्य मिथ्यात्वे च मोक्षे आनन्दावाप्तिबोधकश्रुतेरनुपपत्तेः । मोक्षे आनन्दावाप्ति बोधकश्रुतीनामनावृतानन्दैक्यमर्थो नत्वानन्दसम्बन्धः, अभेदे सम्बन्धानुप पत्तेरिति भवतैवोक्तत्वात् । नचेत्यादिकमपि न युक्तम् , चिदंशस्य स्वपदेनो पादाने स्वान्यस्या जीवचितः प्रसिद्धत्वेन अप्रसिद्धिविरहात् ।

किंच- अपरोक्षतायाः प्रत्यक्षात्मकान्तःकरणवृत्तिविषयत्वरूपत्वे विषयतासम्बन्धेन अर्थसम्बद्धवृत्तिरूपत्वे वा स्वान्यचिदप्रयोज्यापरोक्षत्वाप्रसिद्धेः, स्वपदेन शुद्धस्योपादाने तद्विषयकशब्दजन्यापरोक्षवृत्तेरपि स्वान्यजीवचित्प्रयोज्यत्वेन तदप्रयोज्यत्वाभावात् । नचोक्तस्वप्रकाशत्वस्याप्रसिद्धत्वेपि नक्षतिः, तदत्यन्ताभावस्य तदवच्छिन्नभेदस्य वा असत्प्रतियोगिकाभाववत्प्रसिद्धिसम्भवेन हेत्वप्रसिद्ध्यभावादिति वाच्यम् ,- तथासति ब्रह्मणि व्यभिचारापत्तेः ।

यदपि- अत्रापरोक्षत्वं नोक्तवृत्तिरूपम्, किंत्वज्ञानाविषयत्वाभावप्रयोजकविशिष्टान्तःकरणावच्छिन्नचिद्रूपम् , तथाच नाप्रसिद्धिः, ब्रह्मनिष्ठोक्तापरोक्षत्वस्याधिष्ठानविधया स्वप्रयोज्यत्वेपि स्वान्यचिदप्रयोज्यत्वेन ब्रह्मणि निरुक्तस्वप्रकाशत्वस्य प्रसिद्धेस्तत्र तद्भेदाभावाच्च नोक्तव्यभिचारः; नचापरोक्षत्वस्योक्तरूपत्वापेक्षया ऽज्ञानविषयत्वाभावविशिष्टचिद्रूपत्वं युक्तं लाघवादिति वाच्यम् ,- साक्षात्करोतेस्सकर्तृकत्वानुरोधेनापरोक्षताया उक्तरूपत्वावश्यकत्वात् ; धात्वर्थतावच्छेदकफलशालित्वं हि कर्मत्वम्- फलप्रयोजकव्यापारघटितवाचकत्वं धातोस्सकर्मकत्व मिति तार्किकादयः; स्ववाच्यव्यापारव्यधिकरणं यत्फलं तद्वाचकत्वं धातोस्सकर्मकत्वम् , फलतत्प्रयोजकयोर्धातुवाच्यघटकत्वे धातोस्सकर्मत्वानुपपत्तिः; अतएव जानात्यर्थरूपस्य स्फुरणस्याप्यसत्त्वापादकाज्ञानाविषयत्वाभावप्रयोजक विशिष्टचिद्रूपत्वमेव, नत्व सत्त्वापादकाज्ञानशून्यचिद्रूपत्वम् , जानातेस्सकर्मकत्वानुपपत्तेः ; तादृशप्रयोजकं च घटादिप्रत्यक्षस्थले घटाद्याकारवृत्तिजनकसामग्री, सुखादिप्रत्यक्षस्थले सुखादिजनकसामग्री, तत्पूर्वकालावच्छेदेन सूक्ष्मरूपेण विद्यमाने सुखादौ वर्तमानस्याज्ञानाविषयत्वस्य सुखाद्युत्पत्तिक्षणे अभावो वर्तमानो हि तादृशसामग्रीप्रयुक्तः; इदानीमज्ञानाविषयत्वं सुखादौ चन्दनयोगादिप्रयुक्तमित्यनुभवादिति । तन्न, ब्रह्मगतस्योक्तापरोक्षत्वस्य वेदान्तजन्यवृत्त्यवच्छिन्न

चिद्रूपस्य स्वातिरिक्तपदज्ञानादिरूपाचित्प्रयोज्यत्वेन निरुक्तस्वप्रकाशत्वस्या प्रसिद्धेः । पूर्वोक्तरीत्या व्यभिचाराच्च ।

किंचात्माज्ञानविषयताशून्यचिद्रूपापरोक्षत्वस्यैव हेतौ निवेशो युक्तः, धातोस्सकर्मकत्वोपपत्तये धातुवाच्यतावच्छेदकगर्भे फलतत्प्रयोजकयोर्निवे शावश्यकत्वेपि हेतुकोटौ तन्निवेशस्य विफलत्वात् । वस्तुतोत्र धात्वर्थता वच्छेदकेपि फलतत्प्रयोजकयोर्निवेशो नावश्यकः, घटमिच्छति घटं करोति घटं द्वेष्टीत्यादौ सविषयवाचकधातुसमभिव्याहारे विषयत्वरूपं गौणं कर्मत्व मित्यस्यावश्यं वाच्यत्वेन विषयतानिरूपकवस्तुवाचकत्वरूपसकर्मकत्वस्य फलादेर्धातुवाच्याघटकत्वे ऽप्युपपन्नत्वात् । साक्षात्करोतेर्जानातेश्च उक्तार्थे शक्तिस्वीकारे ईश्वरस्सर्वं साक्षात्करोति सर्वं जानातीत्यादिव्यवहारानुपपत्तिः' ईश्वरस्याज्ञानाभावेनाज्ञानविषयत्वाभावप्रयोजकविशिष्टचित्तादात्म्यस्य तत्र बाधात् ।

यत्तु– इच्छति द्वेष्टि करोतीत्यादेरपि फलावच्छिन्नव्यापारवाचकत्वा देव सकर्मकत्वम्, फलप्रयोजकेच्छा तादृशद्वेषश्च इच्छतिद्वेष्ट्योरर्थः, इच्छा याः फलं सुखादौ प्रमातृसम्बन्धः, गवादौ स्वत्वादिः, द्वेषस्य च सर्पादौ तत्तदनिष्टम्, सुखाद्यनुत्पत्तावपीच्छादेरुक्तसम्बन्धस्वरूपयोग्यत्वानपायात् सुख मिच्छतीत्यादिप्रयोग उपपन्नः, ग्रामप्राप्त्यनुपधानेपि ग्रामं गच्छतीत्यादि प्रयोगवत् ; एवं कालसम्बन्धप्रयोजक उत्पत्तिप्रयोजको वा यत्नः करो त्यर्थः, घटं करोतीत्यादौ घटनिष्ठकालसम्बन्धप्रयोजकयत्नबोधात् ; उक्तं च "कर्मवत्कर्मणातुल्यक्रिय" इति सूत्रे वैयाकरणैः–"कृञोऽकर्मकतापत्तेर्नहि यत्नोर्थ इष्यते । किन्तूत्पादानमेवातः कर्मवत्स्याद्यगाद्यपी" ति; उत्पादन मुत्पत्तिप्रयोजकव्यापारः, यततेश्च केवलयत्नार्थकत्वान्न सकर्मत्वमिति । तन्न, तथासति यत्र पुत्रादिसुखेच्छया व्यजनादिचालनं सामग्रीवशाच्च सन्नि हितशत्रोरपि सुखोत्पत्तिः तत्र पुत्रस्य सुखमिच्छतीतिवत् शत्रोस्सुखमिच्छ

तीति प्रयोगापत्तेः; तत्र तादृशेच्छाप्रयोज्यस्य उत्पत्त्यादिरूपफलस्य पुत्रसुख इव शत्रुसुखेपि सत्त्वात् । विषयताया द्वितीयार्थत्वे च शत्रुसुखविषयकेच्छाविरहान्न तदापत्तिः । एवं यत्र द्वेषप्रयोज्यसामग्र्या शत्रोरिव मित्रस्याप्यनिष्टोत्पत्तिस्तत्र मित्रं द्वेष्टीति व्यवहारापत्तिः, शत्रोस्सुखं नेच्छति मित्रं न द्वेष्टीत्यादिव्यवहारानुपपत्तिश्च । एवमुत्पत्तिप्रयोजकयत्नस्य करोतिवाच्यत्वे जलाहरणाद्यनुकूलयत्नेन श्रमाद्युत्पत्तौ जलाहरणं करोतीतिवच्छ्रमं करोतीति व्यवहारापत्तिः, श्रमं न करोतीति व्यवहारानुपपत्तिश्च । किंच साक्षात्करोतेर्जानातेश्चोक्तार्थकत्वे शुक्तिरूप्यं साक्षात्करोति जानातीत्यनयोरनुपपत्तिः, प्रातिभासिकस्याज्ञानविषयतानवच्छेदकत्वेन द्वितीयान्तार्थस्य शुक्तिरूप्यादिनिरूपितावच्छेदकत्वसम्बन्धावच्छिन्नाधेयत्वस्य उक्ताज्ञानविषयत्वाभावे बाधात् ; घटं जानातीत्यादौ द्वितीयान्तेन घटादिनिरूपितावच्छेदकत्वसम्बन्धावच्छिन्नाधेयत्वस्य भानात् । एवं स्ववाच्यव्यापारव्यधिकरणं यत्फलं तद्वाचकत्वं धातोस्सकर्मकत्वमित्यपि न युक्तम्, फलस्यापि किंचिदपेक्षया व्यापारत्वेन स्ववाच्यव्यापारव्यधिकरणफलाप्रसिद्धेरसम्भवापत्तेः । एधत इत्यादीनामपि परस्परव्यधिकरणनानावृद्ध्यादिवाचकत्वेन तादृशवृद्धेरप्यन्यापेक्षया वा फलत्वेन स्ववाच्यैकवृद्धिरूपव्यापारव्यधिकरणस्यापरवृद्धिरूपफलस्य तादृशवृद्धिप्रयोज्यफलस्य वा वाचकत्वसत्त्वादतिव्याप्तेः ।

न च एधधातोस्स्वपदेनोपादाने वृद्धिसामान्यस्य स्ववाच्यत्वेन स्ववाच्यव्यापाराधिकरणत्वावच्छिन्नभेदवद्वृत्तित्वरूपं तादृशव्यधिकरणत्वं न वृद्ध्यन्तरे तत्फले वा सम्भवतीति नोक्तातिव्याप्तिरिति वाच्यम्,-- सकर्मकधातुसामान्यस्य स्वपदार्थत्वे स्ववाच्यव्यापाराधिकरणसामान्यभेदाप्रसिद्धेः, कालमाश्रयते सर्वमित्यादिव्यवहारेण सर्वत्रापि तादृशयत्किञ्चिद्व्यापारसत्त्वात् । न च स्ववाचकत्व स्वविशिष्टव्यापारवाचकत्वोभयसम्बन्धेन फलविशिष्टत्वमेव सकर्मकत्वम्, व्यापारे स्ववैशिष्ट्यं च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्व स्वप्रयोजकत्वोभयसम्बन्धेन, तथा च संयोगाद्यधिकरणग्रामादिनिष्ठभेदप्रतियोगिता

वच्छेदकत्वसंयोगप्रयोजकत्वयोस्सत्त्वेन ताद्दशव्यापारफलोभयवाचकस्य ग-
म्यादेस्सकर्मकत्वम् ; एधत इत्यादौ च नातिव्याप्तिः, एकवृद्धिफलसमा-
नाधिकरणभेदप्रतियोगितावच्छेदकत्वस्य वृद्धयन्तरे सत्त्वेपि तत्प्रयोजकत्वा
भावादिति वाच्यम् ,– घटं साक्षात्करोतीत्यादौ चाक्षुषादिवृत्त्यवच्छिन्नचितः
प्रमातरीव घटादावपि तादात्म्यसम्बन्धेन सत्त्वेनाज्ञानविषयत्वाभावरूपफल
व्यधिकरणत्वाभावेन सकर्मकत्वानुपपत्तितादवस्थ्यात् । एकवृद्धिफलसमा
नाधिकरणभेदप्रतियोगितावच्छेदकत्वस्वरूपयोग्यतारूपतत्फलप्रयोजकत्वयोर्वृ
द्धयन्तरे सत्त्वेनातिव्याप्तेश्च , फलोपधायकत्वनिवेशे काशीं गच्छन् पथि
मृत इत्यादावव्याप्तया स्वरूपयोग्यतारूपस्यैव प्रयोजकत्वस्य निवेश्यत्वात् ।
एकस्यैव धातोरर्थभेदेन सकर्मकत्वाकर्मकत्वदर्शनेन सकर्मकत्वलक्षणस्यार्थभेद
घटितस्यैव वक्तव्यत्वेन सामान्यतो लक्षणकथनस्यानुचितत्वाच्च । वस्तुतो
द्वितीयार्थाधेयत्वनिष्ठप्रकारतानिरूपितयाद्दशफलनिष्ठविशेष्यताशालिबोधौपयि
काकाङ्क्षावत्त्वं याद्दशधातोस्ताद्दशफलावच्छिन्नव्यापारे बोधनीये ताद्दशधातो
स्सकर्मकत्वमिति तु युक्तम् । अतएवात्मनः पाकमिच्छति पाकीयतीत्यादौ
प्रकृत्यर्थस्य पाकादेस्सकर्मकतया सनन्तधातुसमुदायवत् क्यजन्तपचादिपद
समुदायस्य सकर्मकताया दुर्वारतया तण्डुलं पाकीयतीत्यादिप्रयोगापत्तिरिति
निरस्तम् , कृधातुसमानार्थकयतेरिव सनन्तसमानार्थकक्यजन्तादेरपि कर्म
बोधकसुप्साकांक्षत्वानुपगमेन तण्डुलं पिपक्षतीतिवत्तण्डुलं पाकीयतीति
प्रयोगाप्रसङ्गात् । एवं हंसायते रामा आचार्यायते शिष्य इत्यादौ हंसकर्तृ
काचारस्य गमनादेराचार्यकर्तृकाचारस्य ज्ञानादेश्च क्यजाद्यन्तार्थत्वेपि ग्रामं
हंसायते शास्त्रमाचार्यायत इत्यादिको न प्रयोगः, ताद्दशधातोरपि कर्मबोधक
सुप्साकांक्षत्वानुपगमात् । किंच नारायणं नमस्करोति पण्डितं पुरस्करोत्यस्त्रं
प्रादुष्करोति दुःखमाविष्करोति कन्यामलङ्करोतीत्यादाविव घटं साक्षात्करोती-
त्यादावपि फलस्य निपातार्थत्वमेव नतु धात्वर्थघटकत्वम् । नारायणं नमा

स्करोतीत्यत्र हि स्वापकर्षावधित्वप्रकारकबोधविषयता नमःपदार्थः, व्यापारः कृधात्वर्थः, तथाच नारायणनिष्ठतादृशबोधविषयताप्रयोजकव्यापारानुकूलकृतिमानिति बोधः , तादृशविषयताश्रयतया च नारायणस्य कर्मत्वम् , यतो धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमित्यत्र धात्वर्थतावच्छेदकत्वं न धातुशक्यतावच्छेदकत्वम् , किंतु व्यापाररूपार्थे अनुकूलतासम्बन्धेन विशेषणतया धातुप्रतिपाद्यत्वम् । निपातार्थस्य च धात्वर्थे साक्षादन्वयेन तादृशबोधविषयतारूपधात्वर्थतावच्छेदकत्वमक्षतमेव । एवं भद्रदेशावस्थानरूपपुरःपदार्थस्य ज्ञानरूपाविरादिपदार्थस्य भूषणसंयोगरूपालम्पदार्थस्य चानुकूलतासम्बन्धेन कृधात्वर्थे विशेषणत्वात्तदाश्रयपण्डितादेः कर्मता । तथा प्रकृते साक्षात्पदार्थस्य प्रत्यक्षस्य कृधात्वर्थे विशेषणत्वं विषयतया तदाश्रयघटादेः कर्मत्वं चेत्यलं प्रासङ्गिकविचारणेन ।

किञ्चोक्तस्वप्रकाशत्वावच्छिन्नप्रतियोगिताकभेदस्य हेतुत्वे ब्रह्मणि व्यभिचारो दुर्वारः, स्वप्रकाशो ब्रह्म ‘साक्षादपरोक्षाद्ब्रह्मे’ ति लौकिकवैदिकसामानाधिकरण्यप्रत्ययेन ब्रह्मणि स्वप्रकाशत्वावच्छिन्नभेदस्यावश्यकत्वात् । अन्यथा तत्र स्वप्रकाशतादात्म्यानुपपत्तेः । एवं स्वप्रकाशत्वोपाहिते मिथ्याभूते तद्भेदाभावेन भागासिद्धिश्च । नच स्वप्रकाशत्वोपलक्षितप्रतियोगिकभेदस्यैव हेतुत्वान्न दोष इति वाच्यम् ;– उपहितभेदातिरिक्तोपलक्षितभेदस्योभयवाद्यसिद्धत्वात ।

यदपि– अवेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वरूपं यत्स्वप्रकाशत्वं तदभावरूपमस्वप्रकाशत्वं वा दृश्यत्वम् , वेद्यत्वं च स्वावच्छिन्नाचिद्विषयकं यदभानापादकाज्ञानं तन्निवर्तकवृत्तिव्याप्यत्वरूपं फलव्याप्यत्वम् , तच्च न ब्रह्मणि, यत्रोक्तव्याप्यत्वं स्वाप्यं तस्यैव स्वपदार्थतया ब्रह्मावच्छिन्नचिदप्रसिद्धेः, तथाच निरुक्तवेद्यत्वाभावसमानाधिकरणस्वाभानापादकाज्ञाननिवर्त

कवृत्तिविषयत्वरूपापरोक्षव्यवहारयोग्यत्वस्य ब्रह्ममात्रनिष्ठत्वात्तदभावरूपं दृश्यत्वं प्रपञ्चेऽक्षुण्णम्; शुक्तिरूप्यादेरतीतत्वादिदशायां तस्यासत्त्वापादकाज्ञाननिवर्तकानुमित्यादिवृत्तिव्याप्यत्वे ऽप्यभानापादकाज्ञाननिवर्तकवृत्तिव्याप्यत्वाभावेन तत्र निरुक्तावेद्यत्वसत्त्वेपि तत्रोक्तापरोक्षव्यवहारयोग्यत्वाभावात् दृष्टान्तस्य साधनवत्त्वमुपपन्नम्, घटादौ चोक्तापरोक्षव्यवहारयोग्यत्वसत्त्वेपि तत्रावेद्यत्वाभावे विशिष्टाभावो क्षत एवेति । तन्न, स्वावच्छिन्नचिद्विषयकाभानापादकाज्ञाननिवर्तकवृत्तिविषयत्वाभावसमानाधिकरणाभानापादकाज्ञाननिवर्तकवृत्तिविषयत्वरूपस्वप्रकाशत्वस्य ब्रह्मणि वृत्तिकाल एव सत्त्वेन तदभावस्य ब्रह्मसाधारणतया व्यभिचारात् । नचोक्तस्वप्रकाशत्वाभावस्य निरवच्छिन्नविशेषणतासम्बन्धेन हेतुत्वान्नोक्तव्यभिचार इति वाच्यम्,- उक्तस्वप्रकाशत्वस्यापि मिथ्यात्वेन तदभावस्य निरवच्छिन्नविशेषणतासम्बन्धेनापि सत्त्वेन व्यभिचारापरिहारात् । तदवच्छिन्नभेदस्य हेतुत्वेपि स्वप्रकाशं ब्रह्मेति समानाधिकरणप्रतीत्या ब्रह्मणि तादृशभेदस्यापि सत्त्वेन व्यभिचारावारणात् । ब्रह्मनिष्ठतद्व्यक्तित्वापेक्षयोक्तस्वप्रकाशत्वस्य गुरुत्वेन तदवच्छिन्नभेदाप्रसिद्धेः तुच्छे पञ्चमप्रकाराविद्यानिवृत्तौ च व्यभिचाराच्च ।

यत्तु अज्ञानाप्रयुक्तं सत् यज्जयन्यं तदन्यत्वे सति कालसम्बन्धित्वं हेतौ निवेश्यम्, पञ्चमप्रकारे सत्यन्ताभावात्तुच्छे च कालसम्बन्धित्वाभावान्न व्यभिचार इति । तन्न, सत्यत्ववादिमते घटादौ सत्यन्ताभावेनासिद्धेः । भवन्मतेपि जीवन्मुक्तभोगादौ सत्यन्ताभावेन भागासिद्धेः । पञ्चमप्रकारेपि प्रतियोगिविधया अज्ञानस्य कारणत्वेन सत्यन्तेन तदवारणाच्च । नचाज्ञानप्रयुक्तत्वमज्ञानतल्लेशान्यतरतादात्म्यापन्नत्वम्, पञ्चमप्रकारस्य प्रतियोगिविधया अज्ञानप्रयुक्तत्वेपि तदसमानकालीनत्वेन तत्तादात्म्यापन्नत्वविरहात्सत्यन्तेन तद्वारणम्, जीवन्मुक्तभोगस्याज्ञानासमानकालीनतया तत्तादात्म्यानापन्नत्वेपि क्लेशतादात्म्यापन्नत्वान्नासिद्धिरिति वाच्यम्;- तथा सत्यज्ञानप्रयुक्तत्वस्य निरुक्तरूपस्यैव हेतुत्वसम्भवेनेतरांशवैयर्थ्यात् ।

इति न्यायभास्करे दृश्यत्वभङ्गोऽष्टमः

## अथ जडत्वभङ्गः ।

जडत्वमपि न हेतुः। जडत्वं हि ज्ञातृभिन्नत्वम्, तत्र ज्ञातृत्वं यदि तादात्म्येन वृत्तिमत्त्वरूपं तदा तादृशज्ञातृत्वस्य वृत्त्यधिष्ठानचैतन्य इवान्तःकरणेपि सत्त्वेन उक्तहेतोस्तत्र भागासिद्ध्यापत्तेः। यदि चासत्त्वापादकाज्ञानविषयत्वाभाव प्रयोजकविशिष्टचित्तादात्म्यमेव ज्ञातृत्वम्, घटं जानातीत्यादौ प्रमातृचिति तादृशतादात्म्यभानादित्युच्यते, तदा घटादिप्रत्यक्षस्थले घटादिरूपविषयेपि तादृशचित्तादात्म्यसत्त्वेन घटादावसिद्धिः। नच मनोवच्छिन्नं तादृशचित्तादात्म्यमेव ज्ञातृत्वम्, नतु तादृशचित्तादात्म्यमात्रम्, तथासति घटादिप्रत्यक्षस्थले घटो जानाति घटो ज्ञातेत्यादिव्यवहारापत्तेः; तथाच तादृशव्यवहार प्रयोजकं यन्मनोवच्छिन्ननिरुक्तचित्तादात्म्यं तदवच्छिन्नभेदस्य हेतुत्वात् न घटादावसिद्धिरिति वाच्यम्;– तथापि मनोवच्छिन्नचितेति भागासिद्धेः। नच मनोवच्छिन्नचितो न ज्ञातृत्वम्, सुषुप्तौ तदभावेप्यविद्यावृत्त्यात्मकस्य सुखादिज्ञानस्य साक्षिणि दर्शनादिति वाच्यम्;– तथाप्यविद्याविशिष्टरूपेण सुषुप्तिस्वप्नयोरहङ्कारविशिष्टरूपेण चितो जाग्रति ज्ञातृत्वेपि शुद्धस्याज्ञातृत्वेन तत्र व्यभिचारात्। नच ज्ञातृपदजन्योपस्थितिविशेष्यत्वावच्छिन्नभेदस्य हेतुत्वान्नासिद्धिव्यभिचाराविति वाच्यम्,– ज्ञातेति समुदायस्य क्वापि शक्त्यभावेन तादृशसमुदायजन्योपस्थित्यप्रसिद्धेः। वैयाकरणरीत्या तत्र शक्तिस्वीकारेपि न तादृशभेदस्य हेतुतासम्भवः, ज्ञानानुकूलव्यापारवत्त्वेन चित इव मनसोपि ज्ञातृपदजन्यधीमुख्यविशेष्यत्वेन उक्तभेदस्यासिद्धत्वात्।

यत्तु– ज्ञानपदजन्यधीमुख्यविशेष्यत्वावच्छिन्नभेद एव जडत्वम्, तत्र वृत्तेश्चिदुपरागार्थत्वपक्षे प्रतिबिम्बप्रयोजकमनोवच्छिन्नचैतन्यं जानात्यर्थः, मनोवच्छिन्नचितो घटाद्याकारवृत्तौ प्रतिबिम्बोदयात् घटादिज्ञानं निर्वाह्यम्, घटं जानाति चैत्र इत्यादौ घटादिकं स्वाकारवृत्तिनिष्ठत्वसंम्ब-

न्वेन जानात्यर्थैकदेशप्रतिबिम्बरूपफलेन्वेति, सुखादौ वृत्तिस्वीकारे स्वाकार वृत्तिनिष्ठत्वसम्बन्धेनैव प्रतिबिम्बे सुखादेरन्वयः, तदस्वीकारपक्षे सुखादावेव मनोवच्छिन्नचितः प्रतिबिम्बोत्पत्तिस्वीकारात स्वनिष्ठत्वसम्बन्धेनैव तत्र तदन्वयः, सुखत्वं जानामीत्यादौ सुखत्वादौ वृत्तेः प्रतिबिम्बस्य चास्वीकारेपि स्वाश्रयसुखादिनिष्ठत्वसम्बन्धेन सुखादेः प्रतिबिम्बेन्वयः, तथाचात्र कल्पे जानातिसमभिव्याहृतद्वितीयायाः स्वनिष्ठत्व स्वाकारवृत्तिनिष्ठत्व स्वाश्रयनिष्ठत्वाद्यन्यतमसम्बन्धोर्थ इतिबोध्यम् ; साक्षात्करोत्यर्थस्तु विषयविशिष्टं यत्प्रतिबिम्बितं तत्प्रयोजकप्रयोज्य प्रतिबिम्बविशिष्टा चिदेव, विषयविशिष्टत्वं च स्वावच्छिन्नवृत्तिनिष्ठत्वं स्वनिष्ठत्वं चेत्याद्यन्यतमसम्बन्धेन वाच्यम् ; वृत्तेरावरणभङ्गार्थत्वपक्षे स्वसत्त्वापादकाज्ञानविषयत्वाभावप्रयोजकविशिष्ट-चैतन्यं जानात्यर्थः, घटं जानातीत्यादावाधेयत्वस्य द्वितीयार्थस्य तादृशाज्ञानविषयत्वाभावे ऽन्वयः, तथाच कल्पद्वयेपि जानात्यर्थे विशेष्यतया चितः प्रवेशात्तदवच्छिन्नभेदस्य दृश्यमात्रनिष्ठस्य हेतुतासम्भव इति। तन्न, ज्ञानपदप्रयोज्यशाब्दबोधीयमुख्यविशेष्यत्वावच्छिन्नभेदस्य हेतुत्वे ज्ञानविषयस्सर्वमिति वाक्यजन्यबोधीयविशेष्यताया। ज्ञानपदप्रयोज्यायास्सर्वसाधारण्येन तादृशविशेष्यत्वावच्छिन्नभेदाप्रसिद्धेः । नच शाब्दबोधीयमुख्यविशेष्यतायां ज्ञानपदप्रयोज्यत्वं हि ज्ञानपदजन्यतावच्छेदकत्वं वाच्यम्, अन्यस्य दुर्वचत्वात्, तथाच तादृशचिन्निष्ठविषयताशालिबोधं प्रत्येव ज्ञानपदज्ञानस्य कारणत्वेन तादृशचिन्निष्ठमुख्यविशेष्यताया अपि तादृशविषयतात्वेन जन्यतावच्छेदकत्वादुक्तबोधीयसर्वत्वावच्छिन्नविषयतायाश्चातथात्वान्नासिद्धिरिति वाच्यम् ;- तथासति पर्यायपदान्तरजन्यबोधे व्यभिचारवारणायाव्यवहितोत्तरत्वस्य जन्यतावच्छेदककोटौ निवेशावश्यकत्वेन विषयतायास्तत्रानिवेशेन निरुक्तप्रयोज्यत्वस्य विषयतायामसम्भवेनासिद्धेः । ज्ञानपदप्रयोज्या या विषयताव्यक्तिस्तादृशविषयताव्यक्तेस्तद्व्यक्तित्वेन स्वरूपतो वा भेदप्रतियोगितावच्छेदकत्वसम्भवेन ज्ञानपदप्रयोज्यविषयतात्वाविशि-

त्वस्य गुरुत्वाच्च । नच ज्ञानपदप्रयोज्यां चिन्निष्ठविषयताव्यक्तिं तद्व्यक्तित्वेन गृहीत्वा तन्निष्ठनिरवच्छिन्नावच्छेदकताकभेदस्य तद्व्यक्तित्वावच्छिन्नावच्छेदकताकभेदस्य वा हेतुत्वमनुमतमिति वाच्यम् ; — तदादिपदेन हेत्वादिनिर्देशस्य न्यायप्रयोगे ऽसाम्प्रदायिकत्वस्य भवद्भिरेवासकृदुक्तत्वात् । किञ्च — तादृशमुख्यविशेष्यता उपहितानिष्ठैव, नतु शुद्धचिन्निष्ठा— शुद्धस्य सविकल्पकावेद्यत्वात् , तथाचोक्तमुख्यविशेष्यत्वावच्छिन्नभेदस्य शुद्धे व्यभिचारो दुर्वारः । नच तत्तदुपहितत्वावच्छिन्नभेदस्य तत्तद्विशिष्टत्वावच्छिन्नभेदस्य च शुद्धे स्वीकारेप्युपहितादिघटकाविशेष्यांशत्वावच्छिन्नभेदस्य शुद्धेनङ्गीकारान्न व्यभिचारः, तादृशविशेष्यांशत्वावच्छिन्नभेदस्यैवोक्तमुख्यविशेष्यत्वावच्छिन्नभेदत्वेन निवेशादिति वाच्यम् ;— चैत्रीयघटाद्याकारवृत्तिनिष्ठप्रतिबिम्बप्रयोजकशुद्धचितमादाय मैत्रीयज्ञानव्यवहारापत्तेर्वारणाय ज्ञाधात्वर्थे शुद्धचितो न प्रवेशः-- किंतु मनोवच्छिन्नाचित इति भवद्भिरेव बिन्दुटीकायामुक्तत्वेन मनोवच्छिन्नाचित एव विशेष्यांशत्वेन तदवच्छिन्नभेदस्य मनोवच्छिन्नाचित्यभावेन भागासिद्धेश्शुद्धचिति व्यभिचारस्य च प्रसङ्गात् । स्वनिष्ठत्व स्वाकारवृत्तिनिष्ठत्व स्वाश्रयनिष्ठत्वान्यतमसम्बन्धो जानातिसमभिव्याहृत द्वितीयार्थ इत्यपि न युक्तम् , सुखत्वं जानातीतिवत्सुखवृत्तियावद्धर्मान् जानातीति व्यवहारापत्तेः, स्वाश्रयनिष्ठत्वसम्बन्धेन प्रतिबिम्बे सुखत्वस्येव तद्वृत्तिधर्मान्तरस्यापि सत्त्वात् ।

यदपि ज्ञानत्वावच्छिन्नभेद एव जडत्वम् ; तत्र ज्ञानत्वं च न तावज्जातिः, वृत्तिप्रतिबिम्बितज्ञानाभासेषु तत्सम्भवेपि अखण्डब्रह्मरूपज्ञाने तदयोगात् , किंत्वर्थप्रकाशत्वम् ; नच मोक्षे अन्यार्थोल्लेखाभावात् स्वरूपोल्लेखे च सविषयत्वापातादुक्तज्ञानत्वं न सम्भवतीति वाच्यम् ,— मुक्तावर्थाभावेऽप्यर्थोपलक्षितप्रकाशत्वानपायादिति । तन्न, मुक्तौ प्रकाश्यार्थाभावेन प्रकाशत्वस्यैवासम्भवेनार्थोपलक्षितप्रकाशत्वस्याप्यसम्भवात् । मुक्तिसाधारण

प्रकाशत्वस्य दुर्वचत्वाच्च । किंच ज्ञानत्वं हि सविषयकत्वव्याप्यम्, सविषयकत्वं च स्वसमानसत्ताकविषयसम्बन्धव्याप्यम्, इच्छादौ तथा दर्शनात्, तथाच सर्वदृश्योच्छेदे मोक्षे वर्तमानस्य शुद्धस्य सविषयकत्वासम्भवात् तद्भेदस्य हेतुत्वे शुद्धे व्यभिचारो दुर्वारः ।

यत्तु— सविषयकत्वे स्वसमानसत्ताकविषयसम्बन्धव्याप्तिरेवासिद्धा, इच्छायां सविषयकत्वस्यैवासिद्धेः, याचितमण्डनन्यायेन स्वजनकज्ञानीय विषयतयैवेच्छादौ सविषयकत्वव्यवहारात्, ज्ञानविषययोस्तादात्म्येऽपेव विषयतात्वस्य क्लृप्तत्वादिति । तन्न, घटमिच्छतीत्यादौ हि विषयतानिरूपक ज्ञानजन्यत्वं द्वितीयार्थ इति भवद्भिर्वक्तव्यम्, तथाच घट इष्टसाधनं पटश्च प्रमेय इति समूहालम्बनज्ञानजन्येच्छादशायां घटमिच्छतीतिवत् पटमिच्छतीति व्यवहारप्रसङ्गः। नच स्वजनकतावच्छेदकविषयतावत्त्वमेव इच्छायास्सम्बन्धः, तथाच नोक्तदोष इति वाच्यम्, तथापीष्टसाधनत्वविषयतायाः स्वजनकतावच्छेदकत्वेन घटमिच्छतीतिवदिष्टसाधनत्वमिच्छतीत्यादिव्यवहारापत्तेः । नच स्वजनकतावच्छेदकीभूतेष्टसाधनत्वप्रकारतानिरूपितविशेष्यतावच्छेदकघटत्वादिमत्त्वमेव इच्छायास्सम्बन्ध इति नेष्टसाधनत्वमिच्छतीति व्यवहारापत्तिरिति वाच्यम्,— एवमपि नित्येच्छास्थले उक्तसम्बन्धासंभवेन तस्यास्सर्वविषयकत्वानुपपत्तेः । किञ्च— ज्ञानस्य ज्ञातृज्ञेयनिरूप्यत्व नियमाज्ज्ञानप्रकाशत्वस्य विषयादिप्रकाशत्वव्याप्यत्वं सिद्धम् । तथाच भवन्मते ज्ञेयज्ञातृ विशेषितशुद्धचिद्रूपेणाप्यसम्प्रज्ञातसमाधौ मोक्षे चात्मनः प्रकाशमानत्वान्न ज्ञानत्वोपलक्षितस्वरूपत्वम् । अतएवोक्तं विवरणे "ज्ञातुरर्थप्रकाशस्य ज्ञानत्वादि" ति । तत्र ज्ञातृज्ञेययोर्वृत्त्यवच्छिन्नचैतन्यरूपे असत्त्वापादकाज्ञानविषयत्वाभावप्रयोजकविशिष्टचैतन्यरूपे वा ज्ञानपदार्थे घटकताविरहेपि ज्ञातुरर्थेत्युक्तेर्ज्ञानस्य ज्ञातृज्ञेयानिरूप्यत्वलाभार्थत्वात् ।

च वक्ष्य ज्ञातृज्ञेयाविशेषितरूपेण भासमानस्यात्मनो ज्ञानत्वासम्भवाच्छुद्धात्मनि ज्ञानत्वावच्छिन्नभेदस्य वृत्तेर्व्यभिचारो दुर्वारः । न च सिद्धान्ते ज्ञातृज्ञेयाविशेषितरूपेण भासमानानां जीवेश्वरनित्यविभूतीनां कथं ज्ञानत्वमिति वाच्यम् ,— जीवेश्वरयोः प्रत्यक्त्वविशिष्टतयैव भानाङ्गीकारेण स्वात्मकज्ञातृज्ञेयविशेषितरूपेणैव भानात् । प्रत्यक्त्वस्य च स्वकर्तृकव्यवहारजनकतावच्छेदकत्वानिरूपितविषयताश्रयत्वरूपत्वात् । नित्यविभूतेश्च ज्ञेयाविशेषितरूपेण भानविरहात् स्वप्रकाशत्वेनैव भानेन स्वात्मकज्ञेयविशेषिततयैव भानात् ।

यत्तु—यथा जातेर्व्यक्तिनिरूप्यत्वेपि गोत्वप्रकारेणाश्वावगाहिभ्रमे व्यभिचारेण जातिप्रत्यक्षत्वस्य न व्यक्तिविषयकत्वव्याप्यता— किंतु भ्रमान्यजातिप्रत्यक्षत्वस्यैव, तथा ज्ञानस्य ज्ञेयादिनिरूप्यत्वेपि ज्ञानत्वविशिष्टप्रकाशत्वमेव विषयप्रकाशत्वव्याप्यं न ज्ञानत्वोपलक्षितप्रकाशत्वम् , उदाहृतविवरणवाक्यमपि ज्ञानत्वविशिष्टस्य ज्ञेयादिनिरूप्यतापरमिति नोक्तदोष इति । तन्न, अश्वादौ तादात्म्येन गवादिभ्रमस्य भवन्मतसिद्धत्वे गोव्यक्त्यविशेष्यकगोत्वप्रकारकभ्रमासिद्ध्या दृष्टान्तासिद्धेः । नचाश्वो गौरित्याकारकज्ञानं भवत्वित्याकारके विषयान्तरजिज्ञासारूपे प्रतिबन्धके सति जायमानप्रत्यक्षे गवादिभानासम्भवाद्व्यक्त्यविषयकजातिविषयकप्रत्यक्षप्रसिद्ध्या न दृष्टान्तासिद्धिरिति वाच्यम् ,— तदात्म्येन गोप्रकारकभ्रमस्याप्यश्वनिष्ठविशेष्यतानिरूपितगोत्वनिष्ठप्रकारताकत्वेन अश्वो गौरित्याकारकतासम्भवेन तादृशभ्रमे तादृशेच्छायाः प्रतिबन्धकत्वाप्रसक्तेः । तादात्म्येन धर्म्यध्यासस्थले तद्धर्मसंसर्गाध्यासनियमात् । नच गोनिष्ठविशेष्यतानिरूपितप्रकारत्वानवच्छिन्नाश्वनिष्ठविशेष्यतानिरूपितगोत्वप्रकारताशालि ज्ञानं जायतामितीच्छादशायां नोक्ततादात्म्यारोपसम्भव इति वाच्यम् ,— तद्दशायामप्यवच्छेद्यावच्छेदकभावानापन्न गोत्वनिष्ठप्रकारताद्वयनिरूपकस्य तादात्म्यारोपस्य सम्भवात् ।

नच गोतादात्म्याविषयकज्ञानं जायतामितीच्छादशायां न तत्सम्भव इति वाच्यम् ,— तथासति तुल्ययुक्त्या प्रातिभासिकाविषयकभ्रमो जायतामितीच्छादशायां जायमानभ्रमे प्रातिभासिकभानासम्भवेन अन्यथाख्याति स्वीकारापत्तेः । अस्तुवा धर्मितादात्म्यारोपं विनैव धर्मसंसर्गारोपः, तथापि व्याप्यतावच्छेदके भ्रमान्यत्वनिवेशनमफलम् , तादृशभ्रमदशायां अश्वे गोत्वसंसर्गोत्पत्त्या अश्वस्यैव गोत्वाश्रयव्यक्तित्वाज्जातिप्रत्यक्षत्वस्य तदाश्रय व्यक्तिविषयकत्वव्याप्यत्वाविघातात् । एवं यन्निरूपितविषयिता विषयविषय कत्वाभावव्याप्या तस्य घटादिवत् ज्ञानत्वासम्भवेन निर्विकल्पकज्ञाननिष्ठायाः शुद्धविषयिताया विषयाविषयकत्वाभावव्याप्यत्वाच्छुद्धस्य ज्ञानत्वासम्भवः ।

यत्तु ज्ञानत्वांशे निर्विकल्पके ज्ञानत्वोपलक्षितविशेष्यके नृसिंहाकार प्रत्यक्षे शुद्धविषयितासत्त्वेपि विषयविषयकत्वाभावविरहेण व्यभिचारान्न शुद्धस्य ज्ञानत्वे बाधकमिति । तन्न, तादृशज्ञाने वृत्त्यवच्छिन्नस्य विषया वच्छिन्नस्य वा चैतन्यस्य विषयत्वेपि शुद्धस्याविषयत्वात् । अन्यथा घट स्सन्नित्यादिज्ञानेपि तदापत्तेः । एवं ज्ञानस्य सज्ञेयत्वं सज्ञातृकत्वं च स्वाभाविकमिति भवदभिमतशुद्धस्य ज्ञातृज्ञेयविरहितस्य ज्ञानत्वासम्भवात् उक्तहेतोर्व्यभिचारः ।

यत्तु ज्ञानस्य सज्ञेयत्वं न स्वाभाविकम् ; तद्धि ज्ञेयजन्यत्वं वा ज्ञेय व्याप्यत्वं वा?, नाद्य , परोक्षज्ञाने ईश्वरज्ञाने चाभावात ; परमते ईश्वरज्ञानस्याजन्यत्वात् , मन्मतेपीन्द्रियसन्निकर्षस्येव विषयस्यापि तत्राहेतुत्वात् ; नापि द्वितीयः, यदा यस्यार्थस्य ज्ञानं तदा सोर्थ इति कालिकव्याप्तौ परोक्ष ज्ञाने ईश्वरज्ञाने च व्यभिचारात ; ज्ञानार्थयोर्देशिकव्याप्तेश्चासम्भवात ; ज्ञातरि ज्ञानवत्यर्थाभावादिति । तन्न, यत्र ज्ञानत्वं तत्र विषयतासम्बन्धाव-

च्छिन्नप्रमेयाभाववद्भेद इति व्याप्तिस्वीकारात् । शुद्धस्य निर्विषयत्वेन विषयतासम्बन्धावच्छिन्नप्रमेयाभाववत्तया ज्ञानत्वासम्भवात् । सिद्धान्ते जीवब्रह्मणोः नित्यविभूतेश्च ज्ञानत्वेपि तत्र विषयतासम्बन्धेन स्वात्मकप्रमेयसत्वेन उक्तसम्बन्धावच्छिन्नप्रमेयाभाववत्त्वविरहेणोक्तव्याप्तौ व्यभिचारविरहात् । असद्विषयकविकल्पाख्यवृत्तेश्च ज्ञानत्वाभावेन तादृशवृत्तौ विषयतासम्बन्धावच्छिन्नप्रमेयाभाववत्त्वेपि व्यभिचाराभावात् ।

यदपि– ज्ञानस्य सज्ज्ञातृकत्वं न स्वाभाविकम् ; ज्ञानस्य सज्ज्ञातृकत्वं स्वाभाविकमित्यनेन यत्र ज्ञानत्वं तत्र ज्ञातृजन्यत्वमिति व्याप्तिविवक्षायां नैयायिकादिमते ईश्वरज्ञाने व्यभिचारः; सिद्धान्तेपि वाचस्पतिमते माया वृत्तिरूपज्ञानानङ्गीकारेण चैतन्यस्यैवेश्वरज्ञानरूपत्वात् तत्र व्यभिचारः ; नच तन्मते विषयावच्छिन्नचिद्रूपेण ज्ञातृजन्यतेति वाच्यम् ,– अविद्याद्यनादिविषयस्यानादित्वे तयोर्जन्यजनकभावविरहात् ; यत्र ज्ञानत्वं तत्र ज्ञातृसमवेतत्वमिति व्याप्तौ चाप्रयोजकता, ज्ञानस्य ज्ञात्रजन्यत्ववत् ज्ञात्रसमवेतत्वस्यापि सम्भवात् ; कदाचिज्ज्ञातृसम्बन्धेनैवोक्तव्याप्तेरुपपत्त्या सर्वदा ज्ञातृसम्बन्धासाधकत्वात् ; ज्ञानस्य गुणत्वक्रियात्वयोरनभ्युपगमेन द्रव्याश्रितत्वानुमानायोगात् , अनादेश्च क्रियात्वासम्भवात् ; नचैवं अस्ति ब्रह्मेत्यत्र कर्तरिलकारो न स्यात् , सत्ताया अनादित्वेन क्रियात्वासम्भवादिति वाच्यम् ,– मणिकारमते चैत्रो जानातीत्यादौ ज्ञानकर्तृत्वादेरसम्भवात् ज्ञानाश्रयत्वादिलक्षणायां गौरवाच्चावच्छेदकतासम्बन्धेन ज्ञानप्रकारकशाब्दधीस्वीकाराद् आख्यातस्य कर्तृत्वार्थकत्वासम्भवात् साधुत्वार्थत्ववत् प्रकृते ब्रह्मसत्ताया अनादित्वेन तत्कर्तृत्वबोधासम्भवात् घटोस्तीत्यादावपि क्रियाभावेन कारकान्वयबोधासम्भवादाश्रयत्वस्यैव आख्याततो बोधाच्च ब्रह्मास्ति पदाभ्यामखण्डब्रह्मणोऽस्वीकारेणाख्यातस्य साधुत्वमात्रार्थत्वादिति । तन्न, यत्र ज्ञानत्वं तत्राधेयतया प्रमेयाभाववद्भेद इति व्याप्तौ दोषविरहात् ।

जीवस्य नित्यविभूतेश्च ज्ञानस्वरूपत्वेपि तत्राधेयतयेश्वरस्य सत्त्वादीश्वरस्य तथात्वेपि तत्र "यः पृथिव्यां तिष्ठन्नि" त्यादिश्रुत्युक्तरीत्या सर्वस्यापि सत्त्वेन तेषु व्यभिचारविरहात् । ज्ञानस्य ज्ञाधात्वर्थत्वरूपक्रियात्वसत्त्वेन कि-ञ्चिदाश्रितत्वस्यावश्यकत्वाच्च । "अस्तिब्रह्म" इत्यत्राख्यातस्य साधुत्व मात्रार्थत्वमयुक्तम् ; सत्ताया अनादित्वेन तदनुकूलकृतेरप्रसिद्धावपि तदाश्रय त्वस्य प्रसिद्ध्या तद्बोधे बाधकविरहात । नच ब्रह्मण एव सत्तास्वरूपत्वेन अभेदादाधाराधेयभावोपि नास्तीति वाच्यम् ;- सत्ताया बाध्यत्वाभावरूपत्वा दभावस्य चाधिकरणस्वरूपत्वाद्ब्रह्माभिन्नत्वेपि ब्रह्मवृत्तित्वस्यापि भवद्भिरेव स्वीकारात् । अन्यथा सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावोभयरूपसदसद्विलक्ष-णत्वस्य ब्रह्मण्यतिव्याप्त्यापत्तेः । उक्तं च लघुचन्द्रिकायां सदसद्विलक्षणत्व रूपमिथ्यात्वनिरुक्तौ "तथाच भावरूपधर्मानाश्रयत्वेपि बाध्यत्वाभावरूपधर्मा श्रयत्वान्नातिव्याप्ति" रिति । नच ब्रह्मपदस्य चैतन्यस्वरूपमात्रार्थकत्वा त्तत्राख्यातेनाश्रयत्वबोधनं न युज्यते, निर्धर्मितावच्छेदकशाब्दबुद्ध्यसम्भवा दिति वाच्यम् ,- निष्प्रकारकशाब्दबोधाङ्गीकर्तॄणां भवतां निर्धर्मितावच्छेदक कशाब्दधीस्वीकारे बाधकविरहात् । खण्डवाक्यार्थबोधपूर्वकमहावाक्यार्थ बोधस्वीकर्तृमते घटाद्भिन्नं घटमानयेत्यादौ घटाद्भिन्नमित्यंशेन घटभेदप्रकार कस्य निर्धर्मितावच्छेदककबोधस्य नैयायिकैरपि स्वीकारात् । ब्रह्मपदस्य बृहत्त्वादिविशिष्टपरत्वेन निर्धर्मितावच्छेदककशाब्दबोधप्रसक्तेरभावाच्च । ब्रह्मपदस्य स्वरूपमात्रार्थकत्वेपि निर्धर्मितावच्छेदककबोधानङ्गीकारेपि आख्या तस्य साधुत्वमात्रार्थत्वमयुक्तम्, बाध्यत्वाभावसत्तेति कल्पे यथा अभाना पादकाज्ञानविरोधिनी चिद्भानम्- अनानन्दापादकाज्ञानविरोधिनी चिदानन्द स्तथा असत्त्वापादकाज्ञानविरोधिनी चित्सत्तेति पक्षेपि ब्रह्माभिन्नाश्रयिका तादृशसत्तेति बोधस्य धात्वर्थविशेष्यकस्य सम्भवात् । धात्वर्थविशेष्यकबोध स्यैव स्मृत्यनुमतत्वात् अन्यथा "ब्राह्मो विवाह आहूय यत्कन्या दीयते स्वयम्" इति स्मृतिवाक्यादाह्वानपूर्वकं स्वयं कन्यादानं ब्राह्मो विवाह

इत्यर्थलाभानुपपत्तेः । यदि च ब्राह्मो विवाह इति स्मृतिवाक्यस्य तादृशकन्या दानं ब्राह्मो विवाह इति नार्थः, गान्धर्वादिविवाहसाधारण्याय वहप्रापण इति धात्वनुसारेण च वरनिष्ठकन्याप्राप्त्यनुकूलविलक्षणव्यापारस्यैव विवाह तया कन्यादानस्य विवाहत्वाभावात् , अतएव स्मृतौ विवाहस्याष्टधा विभागस्सङ्गच्छते, सामान्यधर्माक्रान्तानां विशेषरूपेण प्रतिपादनस्यैव विभागत्वात , किंतु यत् यादृशात्मकव्यापाराय आहूय स्वयं दीयते कन्या स व्यापारो ब्राह्मो विवाह इत्येव अर्थ इति- न स्मृतेर्धात्वर्थविशेष्यकबोधपरत्वम् , प्रथमान्तार्थस्य मुख्यविशेष्यता च श्रुत्यनुमता, " अथैतयोः पथोः कतरेणच न तानीमानि क्षुद्राण्यसकृदावृत्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येनत तृतीयं स्थानं तेनासौ लोको न संपूर्यत " इति च्छान्दोग्यश्रुतौ तानीमानि भूतानि क्षुद्राणि— दंशमशककीटादीनि, असकृदावृत्तीनि सन्ति जायस्व म्रियस्वेति भवन्ति— जननमरणाभिन्नभवनाश्रया इति प्रथमान्तार्थविशेष्यकबोधे सत्येव एतच्छब्देन भूतानां परामर्शोपपत्तेः, सर्वनाम्नां प्रधानपरामर्शकत्वात् , धात्वर्थविशेष्यकबोधपरत्वे च जननमरणाभिन्नभवनस्य एतच्छब्देन परामर्शापत्तिः, नचेष्टापत्तिः, "न तृतीये तथोपलब्धेरि"ति सूत्रभाष्य तृतीयस्थानशब्देन केवलपापकर्माण उच्यन्त इत्युक्तेः; एवं " सदेव सोम्येदमग्रआसीदि " ति श्रुतौ " तदैक्षते" ति तच्छब्देन ब्रह्म परामर्शोपि प्रथमान्तार्थविशेष्यतागमकः; लोकेपि " प्रयाति पुरुषस्तस्य पादयोरभिवादये" त्यादौ, तथादर्शनादित्यादिकं विभाव्यते; तथापि नानुपपत्ति , नीलं घटं जानातीत्यादौ नीलप्रकारकघटविशेष्यकज्ञानवानिति बोधस्येव ब्रह्मविशेष्यकसत्ताश्रयत्वप्रकारकज्ञानवानिति बोधस्यैवोक्तश्रुतिवाक्यादुत्पत्तेरिति दिक् ।

इति शेषकुलतिलकस्यानन्तार्यस्य कृतौ न्यायभास्करे
जडत्वभङ्गो नवमः ।

## अथ परिच्छिन्नत्वभङ्गो दशमः ।

एवं परिच्छिन्नत्वमपि न हेतुः । परिच्छिन्नत्वं हि व्यावर्तितत्वम् , आरुण्यादिगुणेन क्रयसाधनगवादिकं परिच्छिन्नमिति व्यवहारात् ; व्यावर्तितत्वं च इतरभेदविधेयकानुमितिविषयत्वम् , तस्य च न हेतुतासम्भवः, ब्रह्मतुच्छयोर्व्यभिचारात् । विषयत्वमात्रस्य हेतुत्वसम्भवेनेतरांशवैयर्थ्याच्च ।

यत्तु परिच्छिन्नत्वं त्रिविधम् देशपरिच्छिन्नत्वं कालपरिच्छिन्नत्वं वस्तुपरिच्छिन्नत्वं चेति, तत्र यद्यपि देशपरिच्छिन्नत्वादिकं किञ्चिद्देशादिलिङ्गकेतरभेदानुमितिविषयत्वादिरूपम् , अयं घट एतद्देशपरिच्छिन्न इत्यस्य एतद्घट एतद्देशेन देशान्तरावच्छिन्नेभ्यो व्यावर्तित इत्यर्थात् ; एवमेतत्कालपरिच्छिन्न इत्यादावपि; तथापि निरुक्तदेशपरिच्छिन्नत्वस्य देशान्तरनिष्ठाभावप्रतियोगित्वं विनानुपपन्नतया अर्थापत्त्या देशान्तरनिष्ठात्यन्ताभावप्रतियोगित्वस्य देशपरिच्छिन्नशब्देन लाभादुक्तरीत्यैव कालान्तरनिष्ठध्वंसप्रतियोगित्वस्य कालपरिच्छिन्नशब्देन वस्त्वन्तरनिष्ठभेदप्रतियोगित्वस्य च वस्तुपरिच्छिन्नशब्देन लाभात्तत्रापि देशान्तरादिघटितस्य हेतुत्वे तस्य सर्वदृश्याननुमतत्वादत्यन्ताभावप्रतियोगित्वादिभिन्नांशस्य व्यर्थत्वाच्चात्यन्ताभावप्रतियोगित्वं देशपरिच्छिन्नत्वं ध्वंसप्रतियोगित्वं कालपरिच्छिन्नत्वं भेदप्रतियोगित्वं च वस्तुपरिच्छिन्नत्वमिति- त्रिविधं परिच्छिन्नत्वमपि हेतुरिति । तन्न, समवायसम्बन्धावच्छिन्नाभावप्रतियोगिताया ब्रह्मणि सत्त्वेन प्रथमहेतोस्तत्र व्यभिचारात् । संयोगसम्बन्धावच्छिन्नाभावप्रतियोगिताविवक्षणेऽप्यमूर्तनिष्ठसंयोग-सम्बन्धावच्छिन्नाभावप्रतियोगिनि ब्रह्मणि व्यभिचारात् । नच तत्र व्यभिचारवारणाय मूर्तनिष्ठात्यन्ताभावीयसंयोगसम्बन्धावच्छिन्नप्रतियोगिताया हेतुत्वमङ्गीक्रियत इति वाच्यम् ,- आकाशकालप्रकृत्यादावसिद्धेः; सर्वमूर्तेष्वाकाशमित्यादिप्रतीतेर्वृत्तिनियामकसंयोगेनाप्याकाशस्यात्यन्ताभावविरहात् ।

ध्वंसप्रतियोगित्वरूपद्वितीयहेतोश्च प्रकृतिकालादावसिद्धिः, "गौरनाद्यन्तवती" "नित्या सततविक्रिये "त्यादिभिः प्रकृत्यादेर्नित्यत्वस्यावगमात् । भेदप्रतियोगित्वरूपतृतीयहेतोश्च ब्रह्मणि व्यभिचारः, तस्य जडनिष्ठभेदप्रतियोगित्वात्; अन्यथा जडत्वापत्तेः ।

यद्यपि- स्वसमानसत्ताकात्यन्ताभावप्रतियोगित्वं देशपरिच्छिन्नत्वम्, तादृशभेदप्रतियोगित्वं च वस्तुपरिच्छिन्नताम्, यत्र हेतुः स्थाप्यः स स्वपदार्थः, तथाचात्मनि हेतोः स्थापने तस्यैव स्वपदेन धार्यत्वात्तत्समानसत्ताकात्यन्ताभावादेरप्रसिद्ध्या अनात्मन एव स्वपदार्थत्वान्नात्मनि व्यभिचारइति । तदपि न; अविद्याकाशादेर्व्यावहारिकस्य पारमार्थिकाभावपक्षे स्वसमानसत्ताकाभावप्रतियोगित्वाभावेन असिद्धेः; शुक्तिरूप्यादेः प्रातिभासिकस्य व्यावहारिकाभावप्रतियोगित्वेन दृष्टान्ते साधनवैकल्याच्च । नच स्वान्यूनसत्ताकाभावप्रतियोगित्वस्य विवक्षणान्न दोष इति वाच्यम्,— स्वत्वस्याननुगतत्वेन भागासिद्धेः । नच पारमार्थिकनिष्ठं यद्व्यावहारिकाभावप्रतियोगित्वं तद्भिन्नत्वे सति पारमार्थिकनिष्ठं यत्प्रातिभासिकाभावप्रतियोगित्वं तद्भिन्नप्रतियोगित्वस्य हेतुत्वे तात्पर्यान्न भागासिद्धिरिति वाच्यम्;- व्यावहारिकत्वप्रातिभासिकत्वादीनां सत्यत्ववादिमते असिद्धत्वेन तद्घटितहेतोरुभयवाद्यसिद्धत्वात् । घटो नास्ति घटत्वेन प्रमेयं नास्तीति प्रतीतिविषयीभूताभावयोरैक्येन अभावैक्ये प्रतियोगितावच्छेदकैक्ये प्रतियोगिताया ऐक्येन घटादिनिष्ठव्यावहारिकाभाव प्रतियोगिताया अपि पारमार्थिकनिष्ठत्वेन तद्भिन्नत्वाभावादसिद्धेरुक्तरीत्यैव दृष्टान्ते साधनवैकल्याच्च ।

एतेन वस्तुतस्तु लाघवादात्मावृत्तित्वविशिष्टप्रतियोगितासम्बन्धेन अत्यन्ताभावो भेदो वा हेतुर्बोध्य इत्यपि निरस्तम्, उक्तरीत्या घटादि

निष्ठप्रतियोगिताया: आत्मावृत्तित्वासम्भवेनासिद्धेः; आत्मावृत्तित्वविशिष्ट सम्बन्धेन अत्यन्ताभावादेर्हेतुत्वमित्येतावतैव निर्वाहे तत्र सम्बन्धतावच्छेदके प्रतियोगितात्वानिवेशवैफल्याच्च । किंच घटो नास्तीति बुद्धावभावांशे प्रतियोगिन एव प्रकारतया भानान्मण्यभावादेः कारणत्वे प्रतियोगिनोवच्छेदकत्वाच्चाभावनिष्ठस्य प्रतियोगिनिरूपितानुयोगिताख्यसम्बन्धस्यावश्यमङ्गीकार्यत्वेपि प्रतियोगिन्यभावविशिष्टबुध्यात्मकस्याभावीयो घट इत्यादि प्रत्ययस्यानुभवविरुद्धत्वात् प्रतियोगिव्यवहारस्य चानुयोगितानिरूपकत्वावलम्बनतयैवोपपत्तेश्च अभावीयप्रतियोगिताख्यस्वरूपसम्बन्धे मानाभावात् प्रतियोगितासम्बन्धेन अत्यन्ताभावादेर्हेतुत्वमनुचितम् । नच ध्वंसस्य प्रतियोगिनिष्ठप्रत्यासत्त्या प्रतियोगिजन्यत्वानुरोधेन तस्य प्रतियोगिनिष्ठ सम्बन्धोपगम आवश्यक इति वाच्यम् ,- अत्यन्ताभेदे तादात्म्यानङ्गीकर्तॄणां भवतां प्रतियोगितासम्बन्धेन ध्वंसं प्रति तादात्म्येन प्रतियोगिनो हेतुत्वमित्यस्यासम्भवात ; अभावान्तरस्य तादृशसम्बन्धे मानाभावाच्च । स्पष्टं चेदं पूर्वपक्षव्याप्तिविचारगादाधर्याम् ।

एतेन घटादयः स्वानुगतप्रतिभासे वस्तुनि कल्पिताः- विभक्तत्वात् - स्वानुगतप्रतिभासे रज्जाविदमंशे कल्पितसर्पमालादिवदित्यनुमानान्मिथ्यात्व सिद्धिः, स्वानुगतप्रतिभासे कल्पितत्वं च स्वनिष्ठविशेष्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नप्रकारताव्यापकस्वनिवर्तकधीविषयताकत्वम् , तादृश प्रकारताव्यापकस्वात्यन्ताभावकत्वं वा; अत्र तादृशप्रकारतासमानाधिकरण स्वनिवर्तकधीविषयताकत्वस्य साध्यत्वे घटादेः स्वतादात्म्यधीविषयघटत्वादौ कल्पितत्वमादाय परैरर्थान्तरं वाच्यमतो व्यापकत्वमुक्तम् ; तादृशप्रकारता च निरवच्छिन्ना ग्राह्या, येन स्वनिष्ठविशेष्यतानिरूपितप्रकारतावति द्रव्य गुणादौ स्वनिवर्तकधीविषयत्वाभावेपि न क्षतिः; प्रतियोगिताविषयतादेरनवच्छिन्नप्रकारतास्वीकारे तत्र स्वनिवर्तकधीविषयताविरहानिरूपितान्त-

स्थाने स्वतादात्म्यसमानाधिकरणेति वाच्यम्; एवंच सामानाधिकरण्य मपि व्यापकत्वस्थाने वक्तुं शक्यम्; द्वितीयसाध्ये तु न प्रकारताया मनवच्छिन्नत्वं देयम्; विभक्तत्वं च स्वसमानसत्ताकभेदप्रतियोगित्वमिति न ब्रह्मणि व्यभिचारः;- इत्यानन्दबोधानुमानपरिष्कारोपि निरस्तः; खण्डो गौर्मुण्डो गौरित्यनुगतप्रतीतौ गवादिषु तादात्म्येन प्रकारीभूते गोत्वादौ गवादिनिवर्तकधीविषयत्वाभावेन प्रथमसाध्ये बाधापत्तेः। नच खण्डो गौरित्यादौ प्रकारीभूतं गोत्वं सद्रूपमेव, पराभिमता यावत्यो व्यक्तयस्ताव दन्यतमोपरक्तसद्रूपस्यैव गौरित्यादिव्यवहारकारणत्वात्, घट इत्यादिव्यव हारेपि तादृशयावद्व्यक्त्यन्यतमोपरक्तसद्रूपस्यैव कारणत्वात्, तथा च न बाध इति वाच्यम्;- तावदन्यतमत्वघटकभेदानां विशेषणविशेष्यभावे विनि गमनाविरहेण तावदन्यतमोपरक्तसद्रूपस्य गौरित्यादिव्यवहारकारणताया आनन्त्यप्रसङ्गात् गौरवाद्दुर्ज्ञेयत्वाच्च उक्तान्यतमत्वघटितस्य तथात्वा सम्भवेनातिरिक्तगोत्वादेः कल्पनस्यैव युक्तत्वात्। तावदन्यतमोपरक्तप्रमे- यत्ववस्तुत्ववाच्यत्वादीनां तथात्वकल्पनमादाय विनिगमनाविरहाच्च। नचो क्तान्यतमत्वस्याखण्डस्य स्वरूपत एव निवेशान्न गौरवं दुर्ज्ञेयत्वं चेति वाच्यम्;- तथा सति तादृशान्यतमत्वस्यैव तथात्वौचित्यात्; तत्र गवा दीनां कल्पितत्वाभावेन बाधस्य दुर्वारत्वात्।

एतेन तावद्व्यक्तीनां यावन्ति सद्रूपेण सह तादात्म्यानि तावदन्य तमत्वविशिष्टसम्बन्धेन सद्रूपविशिष्टं गौरित्यादिव्यवहारविषयः, तेन सम्ब न्धेन सद्रूपं तत्तन्निष्ठकारणतादेरवच्छेदकम्, तथाच खण्डो गौरित्यादि प्रतीतौ सत एव प्रकारत्वात्तत्र कल्पितत्वस्य गवादिषु सत्त्वान्न बाध इति निरस्तम्; कारणताबाहुल्यगौरवदुर्ज्ञेयत्वादेः पूर्वोक्तरीत्या प्रसङ्गात्। अन्यतमत्वस्यैव तथात्वापत्तेश्च।

एतेन अनन्ता हि मूलाज्ञानीयाः कार्यजननानुकूला विक्षेपनामक शक्तयो निर्विषयकाः, आवरणशक्तेरेव सविषयकत्वात् , तथाच घटव्यक्तिभिरवच्छिन्ना जलाहरणादिकार्यानुकूला तादृशशक्तिर्घटत्वम् , एवं पटत्वादिकमपि वाच्यमिति प्रत्युक्तम् ।

यत्तु गोत्वादिजातिस्वीकारेपि तादृशान्यतमत्वस्य कारणतावच्छेदकत्ववारणाय तस्योभाभ्यामप्यन्यथासिद्धिनिरूपकत्वस्य स्वीकारान्नोक्तापत्तिरितितन्न, सद्रूपातिरिक्तजातिस्वीकारपक्षे सद्रूपस्याप्यन्यथासिद्धिनिरूपकत्वकल्पनात् । किंच, अत्र साध्यघटकीभूतं स्वनिवर्तकधीविषयत्वं यदि स्वनाशकज्ञानविषयत्वरूपं तदा यादृशपूर्वज्ञानस्योत्तरेण ज्ञानत्वज्ञानेन नाशस्तादृशपूर्वज्ञाने सिद्धसाधनात् । अवच्छेदकावच्छेदेन साध्यत्वेपि तद्वदेव वियदादेरमिथ्यात्वापत्त्यार्थान्तरात् । मुद्गरपातादिना नष्टे घटादौ बाधाच्च । स्वस्वकारणान्यतरत्वावच्छिन्नाभावप्रयोजकत्वरूपबाधकतानिवेशे च तादृशान्यतरत्वावच्छिन्नाभावप्रयोजकधीविषयताकत्वमात्रस्य साध्यतयैव समीहितनिर्वाहे व्यापकान्तनिवेशवैयर्थ्यात् । द्वितीयसाध्ये विशिष्टाभावोभयाभावसम्बन्धान्तरावच्छिन्नाभाववारणं दुर्घटम् । स्वनिष्ठविशेष्यतावच्छेदकधर्मावच्छिन्नत्व तादात्म्यसम्बन्धावच्छिन्नत्वयोः प्रतियोगिताविशेषणत्वेन तद्वारणेऽप्यर्थान्तरं दुर्वारम् , स्वानधिकरण एव स्वनिष्ठविशेष्यतानिरूपितप्रकारतासिद्ध्या प्युक्तसाध्यस्य पर्यवसानसम्भवेन तदधिकरणे तदत्यन्ताभावासिद्धेः । स्वाधिकरणतासमानाधिकरणप्रकारतानिवेशे च प्रकारतानिवेशवैयर्थ्यम् , स्वाधिकरणताव्यापकाभावप्रतियोगित्वस्यैव साध्यतासम्भवात् ; तावन्मात्रस्य च प्रागेव निरस्तत्वात् ।

अतएव, घटादि सद्रूपे कल्पितं प्रत्येकं तदनुविद्धत्वेन प्रतीयमानत्वात् जलतरङ्गचन्द्रवदित्यनुमानान्मिथ्यात्वसिद्धिः ; अत्र सद्रूपे कल्पितत्वं सद्रूपज्ञाननिवर्त्यत्वम् , तदनुविद्धतया प्रतीयमानत्वं च सत्तादात्म्येन प्रतीय

मानत्वम्, तथाच घटादीनां सर्वेषां सत्तादात्म्येन प्रतीयमानत्वात् घटादिकं सर्वं सद्रूपज्ञाननिवर्त्यमिति पर्यवसितम्, तरङ्गस्थश्चन्द्रस्सन्निति प्रतीत्या सत्तादात्म्यस्य सद्रूपज्ञाननिवर्त्यत्वस्य च तरङ्गचन्द्रे सत्त्वादुदाहरणसङ्गतिरिति ब्रह्मसिद्धिकारोक्तमपि निरस्तम्; ब्रह्मणो रूपादिहीनस्य चाक्षुषादिविषयत्वासम्भवात् । ब्रह्मणस्सत्तादिजातिरूपतया द्रव्यतादात्म्यापन्नजातिनिष्ठलौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति स्वाश्रयतादात्म्यसम्बन्धेन रूपस्य कारणत्वेन तेन सम्बन्धेन ब्रह्मणो रूपादिमत्त्वेपि तस्य चाक्षुषासम्भव एव, तस्याऽऽसंसारमज्ञानावृतत्वेन शब्दैकगम्यतया घटस्सन्नित्यादिबुद्धिविषयत्वानुपपत्तेः । "न चक्षुषा पश्यति कश्चनैनम्" "पराञ्चि खानि व्यतृणत्स्वयम्भूरि" त्यादिश्रुतिविरोधात् । अन्यथा सप्रकारकशब्दाजन्यवृत्तिविषयत्वरूपदृश्यत्वापत्त्या मिथ्यात्वापत्तेः ।

यदपि सद्भानानन्दांशानाम्मध्ये आनन्दांशरूपेणैव ब्रह्म मूलाज्ञानावृतम्, पूर्णानन्दो मे न भातीति प्रत्ययात्, सद्भानरूपे भासेत इति प्रत्ययाच; नच सद्भानांशयोरनावृतत्वे घटाद्याकारवृत्त्यभावकालेपि घटस्सन् घटो भातीति धीस्स्यादिति वाच्यम्,– सद्भानांशयोर्मूलाज्ञानेनानावृतत्वेपि घटाद्यवच्छिन्नचिदज्ञानेन तूलाज्ञानशब्दितेनावृतत्वात् तादृशवृत्त्यभावकाले तथाबुद्ध्यापादनासम्भवात्; वृत्त्या तादृशज्ञाननाशे च तथा व्यवहारात्; एकाज्ञानपक्षे मूलाज्ञानेनैव सद्भानांशयोरावृतत्वेपि वृत्त्या तदुच्छेदासम्भवेपि वृत्तिकाले तथा व्यवहार उपपद्यते; घटस्सन् घटो भातीत्यादिव्यवहारं प्रति घटाद्याकारवृत्त्यभावविशिष्टमूलाज्ञानविषयतायाः प्रतिबन्धकत्वेन वृत्तिदशायां प्रतिबन्धकविरहात; तथाच घटस्सन्नित्यादिप्रतीतौ ब्रह्मणो विषयत्वमुपपन्नमिति । तन्न, घटं नजानामीति साक्षिधिया घटादेरेव अज्ञानविषयत्वावगाहनेन तन्निवर्तकचाक्षुषादिवृत्तौ घटादेरेव भानौचित्यात् सद्रूपस्य भानाङ्गीकारस्यानुचितत्वात् । नच घटाद्यवच्छेदेन चितः स्फुरणवारणाय

घटाद्यवच्छेदेन चित्यज्ञानविषयतानामवश्यं कल्पनीयतया तदवच्छेदकत्वेनैव घटादीनामस्फुरणोपपत्तौ तेष्वज्ञानविषयत्वान्तरकल्पने गौरवमिति वाच्यम् ;- घटाद्युपहितचैतन्यानां केवलचितो भिन्नत्वपक्षे उपहितचैतन्येष्वज्ञानविषयत्वानां घटादिषु तदवच्छेदकत्वानां च कल्पनीयतया तदपेक्षया घटादिष्वज्ञानविषयत्वानां कल्पनाया एव लघीयस्त्वात् । तादृशचैतन्यानां केवलचिदभिन्नत्वपक्षेपि घटादिविशेषितचिद्रूपे संशयाद्यभावरूपास्फुरणस्य घटादावज्ञानविषयत्वाङ्गीकारमात्रेणैव निर्वाहात् तादृशचिद्रूपे अज्ञानविषयत्वाकल्पनात् । न चाद्यपक्षे घटादाववच्छेदकत्वानि न कल्प्यानि, तत्राज्ञातचित्तादात्म्यादेवाज्ञातत्वव्यवहारोपपत्तेरिति वाच्यम् ;— विनिगमकाभावात् । घटादावज्ञातत्वस्वीकारे ऽप्यज्ञाताचित्तादात्म्यादेव तदुपहितचित्स्वज्ञातत्वव्यवहारनिर्वाहात् । नच चित्यज्ञातत्वस्वीकारे अज्ञातत्वशून्यचिद्रूपमपरोक्षज्ञानमिति सम्भवति, घटादौ तत्स्वीकारे तु नापरोक्षत्वम्, घटाद्याकारवृत्त्यनुत्पत्तिकालेपि घटादेरपरोक्षत्वापत्तेः, किंत्वज्ञातत्वशून्योपहितत्वविशिष्ट चिद्रूपं तथा वाच्यमिति गौरवाच्चित्यज्ञातत्वस्वीकारपक्षे लाघवमिति वाच्यम्,— घटादावज्ञातत्वस्वीकारपक्षेऽप्यज्ञातत्वाभावस्यैवापरोक्षतारूपत्वसम्भवात् । नचैवमळीकस्याप्यपरोक्षत्वापत्तिः, तस्याज्ञातत्वशून्यत्वादिति वाच्यम्,— वृत्त्यभावदशायां अज्ञातत्वसत्त्वेपि प्रातिभासिकस्याज्ञातत्वाभावस्य सम्भवेन तद्दशायामपरोक्षत्वव्यवहारवारणाय स्वसमानसत्ताकाज्ञातत्वसामान्याभावकत्वस्यैवापरोक्षतारूपत्वावश्यकतया ऽळीकस्यापरोक्षत्वापत्तिविरहात् । अस्तुवा सद्रूपस्याज्ञानविषयता, तथापि तन्निवर्तकवृत्तिविषयत्वं सद्रूपस्यानावश्यकम् ; नच तथासति सद्रूपावरणानाशे घटस्सन्नित्यादिव्यवहारानुपपत्तिरिति वाच्यम्,- घटादिविषयकवृत्तेरेव घटाद्यवच्छेदेन सद्रूपावरणाभिभावकत्वसम्भवात् । अज्ञाताविषयकत्वेपि घटाद्याकारवृत्तेरज्ञानानवच्छेदकविषयकत्वेनैव प्रमात्वसम्भवात् । तात्विकप्रमात्वमेवाज्ञातविषयघटितं ब्रह्माकारवृत्ताविति वक्तुं शक्यत्वात् ।

यद्यपि नव्यप्राभाकरमते विषयावभासकसामग्र्या एव ज्ञानग्राहकत्ववत् मीमांसकमते कालसम्बन्धिग्राहकसामग्र्याः कालग्राहकत्ववत्सत्ताग्राहकसामग्र्यास्सत्ताग्राहकत्वाङ्गीकारात् सत्तारूपं ब्रह्म सर्वप्रत्ययेषु भासते, “न सोऽस्ति प्रत्ययो लोके यत्र शब्दो न भासते” इति शाब्दिकोक्तनियमस्य सिद्धान्ते स्वीकारादिति। तन्न, केवलवह्निव्याप्त्यादिज्ञानात्सत्ताविशिष्टवह्न्याद्यनुमित्यादेरसम्भवेन केवलवह्न्यादिवाचकपदेन सत्ताविशिष्टवह्न्यादिबोधासम्भवेनानुमित्यादौ सत्ताभानासम्भवात् । वह्निर्न सन्नित्यादिज्ञानानन्तरजातानुमितौ वह्न्यादौ सत्ताभानासम्भवाच्च । नच व्याप्त्यादिज्ञानेपि सत्ताविशिष्टवह्न्यादेरेव भानादनुमितौ सत्ताविशिष्टवह्न्यादिभानसम्भव, वह्निर्नासन्नित्यादिधीकालेपि सत्तावह्नित्वयोरेकत्र द्वयमिति रीत्या प्रकारत्वसम्भवादिति वाच्यम् ,– एवं सति सामानाधिकरण्येन सिध्यादिप्रतिबध्यतावच्छेदकगर्भे शुद्धवह्नित्वावच्छिन्नविधेयत्वशुद्धपर्वतत्वावच्छिन्नोद्देश्यत्वादेर्निवेशानुपपत्तेः । वह्नित्वनिष्ठनिरवच्छिन्नावच्छेदकताभिन्नसत्तानिष्ठनिरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वरूपशुद्धवह्नित्वावच्छिन्नत्वस्य विधेयतायान्निवेशे च शुद्धपर्वतत्वावच्छिन्नत्वशुद्धसंयोगावच्छिन्नत्वयोरप्युक्तरीत्यैव निवेश्यतया अधिकभेदनिवेशाद्विशेषणविशेष्यभाव विनिगमनाविरहाद्गुरुतरप्रतिबध्यप्रतिबन्धकभावबाहुल्यापत्तिः । एवं परामर्शकार्यतावच्छेदकबाधप्रतिबध्यतावच्छेदकादावपि तथा निवेशावश्यकतया बहुतरगौरवं दुर्वारम् । एवं वह्निर्नास्तीत्यादिबुद्धौ सत्ताया वह्न्यंशे उपलक्षणतया भानं स्वीकार्यम् , सत्ताविशिष्टवह्नित्वस्य गौरवेणानवच्छेदकत्वात् , तथाच महानसीयवह्निर्नास्तीत्यादौ महानसीयत्वादेरुपलक्षणतया भानवारणाय कल्पनीयायाः स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धावच्छिन्नधर्म्यन्तरानिरूपितप्रकारत्वानवच्छिन्नप्रकारतानिरूपितविशेष्यत्वावच्छिन्नप्रकारतानिरूपितप्र-

सर्गतासम्बन्धेन ज्ञानं प्रत्यभावीयानुयोगिताभेदस्य कारणतया उपपत्तये प्रकारत्वानवच्छिन्नप्रकारतायां सत्तान्यनिष्ठत्वस्य निवेश्यतया गौरवात् । तस्मात्सत्तायास्सर्वप्रत्ययवेद्यत्वमनुचितम् ।

यदपि सत्तादात्म्येन प्रतीयमानत्वं च सद्वृत्तित्वविशिष्टं भेदप्रतियोगित्वम्, तथाच यदुक्तप्रतियोगित्ववत्तत्सद्रूपधीनिवर्त्यं यथा तरङ्गचन्द्र इत्यत्र तात्पर्यान्नानुपपत्तिरिति । तदपि न, सद्वृत्तित्वविशिष्टस्यैव हेतुत्वसम्भवेन तत्र भेदप्रतियोगितात्वनिवेशवैयर्थ्यात् । असति व्यभिचारात् । जगत्सत्यत्ववादिमते सद्वृत्तित्वविशिष्टप्रतियोगित्वादेः प्रपञ्चे अस्वीकारेण सन्दिग्धासिद्धेश्च ।

इति शेषकुलतिलकस्यानन्ताचार्यस्य कृतौ न्यायभास्करे परिच्छिन्नत्वभङ्गो दशमः ।

## अथांशित्व हेतुभङ्ग एकादशः ।

अयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी अंशित्वात् इतरांशिवदित्यनुमानान्मिथ्यात्वसिद्धिः ; नच पटे तन्त्ववच्छिन्नचिदेवोपादानम् तन्तुरिति मते सिद्धसाधनम्, तादात्म्येन तन्तौ पटस्यात्यन्ताभावसत्त्वादिति वाच्यम्, — तत्र तन्तुपदस्योपादानपरत्वादुक्तानुमानेन स्वोपादाननिष्ठात्यन्ताभावप्रतियोगित्वलक्षणमिथ्यात्वसिद्धेः ; नच कस्यचित्पटस्य संयोगसम्बन्धेनैतत्तन्तुषु सत्त्वेन तत्र तन्निष्ठात्यन्ताभावप्रतियोगित्वनिरहाद्व्यभिचार इति वाच्यम् ;— तदसमवेतस्य तन्निष्ठात्यन्ताभावप्रतियोगित्वमङ्गीकुर्वतस्तत्संयुक्तस्यापि तन्निष्ठात्यन्ताभावप्रतियोगित्वस्वीकारेण पक्षसमत्वात् ; अभावश्च एतत्पटानव

च्छेदकावच्छिन्नवृत्तिकान्यत्वेन विशेषणीयः, तेन माध्याप्यवृत्तितामादा यार्थान्तरम्, नवा मिथ्यात्वघटकात्यन्ताभावस्यानवच्छिन्नवृत्तिकान्यत्वस्वीकारेपि क्षतिः इति — चित्सुखाचार्यपक्षोपि न युक्तः— विशिष्टाभावमुभयाभावं सम्बन्धान्तरावच्छिन्नप्रतियोगिताकाभावं चादाय सिद्धसाधनात् । वैशिष्ट्यव्यासज्यवृत्तिधर्मानवच्छिन्नत्वे सति तादात्म्यसम्बन्धावच्छिन्नत्वस्य प्रतियोगितायां निवेशेपि न निस्तारः, व्यासज्यवृत्तिधर्मावच्छिन्नेपि तदवच्छिन्नत्वस्य द्वित्वादिनाऽभावसत्त्वात् । व्यासज्यवृत्तिधर्मावच्छिन्नं यत्तत्तद्व्यक्तित्वावच्छिन्नभेदकूटवत्त्वस्य असर्वज्ञ दुर्ज्ञेयत्वात् । व्यासज्यवृत्तिधर्मावच्छिन्नत्वावच्छिन्नप्रतियोगिताकभेदनिवेशेप्येतत्पट तत्पटोभयत्वावच्छिन्नप्रतियोगितायाः स्वभिन्नत्व व्यासज्य वृत्तिधर्मावच्छिन्नत्वोभयत्वावच्छिन्नभेदवत्त्वा स्त्वभिन्नत्वविशिष्टव्यासज्य- वृत्तिधर्मावच्छिन्नत्वावच्छिन्नभेदवत्त्वाच्च तदव्यावृत्तेः । नच स्वावच्छिन्न प्रतियोगिताकत्वसम्बन्धेन व्यासज्यवृत्तिधर्मावच्छिन्नत्वविशिष्टभेदस्य प्रतियोगिताविशेषणत्वान्नानुपपत्तिः; निरुक्तोभयाद्यवच्छिन्नप्रतियोगिता च तादृशोभयत्वाद्यवच्छिन्नस्यैव संसर्गो नतु प्रत्येकं व्यासज्यवृत्तिधर्मावच्छिन्नत्व विशिष्टस्य, तद्धर्मविशिष्टपर्याप्तावच्छेदकताकप्रतियोगिता तद्धर्मावच्छिन्नस्य संसर्ग इति स्वीकारादुक्तभेदव्यावृत्तिरिति वाच्यम्;— एवमपि प्रतियोगि ताया प्रतियोगिस्वरूपत्वपक्षे बाधः, एतत्पटत्वावच्छिन्नैतत्पटात्मकप्रतियोगिताया एव वैशिष्ट्याद्यवच्छिन्नत्वात्सम्बन्धान्तरावच्छिन्नप्रतियोगिताया अपि तादात्म्यसम्बन्धावच्छिन्नत्वात् । प्रतियोगिताया अतिरिक्तत्वेपि यादृश प्रातिभासिकविशेषस्य वैशिष्ट्यव्यासज्यवृत्तिधर्माभ्यामेव भानं तादृशप्रातिभासिके व्यभिचारश्च, तत्र वैशिष्ट्याद्यनवच्छिन्नप्रतियोगित्वसत्त्वे मानाभावात् । नचैतत्पटत्वपर्याप्तावच्छेदकताकत्वं प्रतियोगित्वे निवेश्यम्, उक्तोभयाभावविशिष्टाभावप्रतियोगित्वयोरतथात्वान्नोक्तदोष इति वाच्यम्;- दृष्टान्ते साध्यवैकल्यापत्तेः । नचैतत्पटत्वेन पटान्तराभावमादाय तत्र साध्य

सत्त्वनिर्वाह इति वाच्यम् ;— व्यधिकरणधर्मावच्छिन्नाभावानुपगमे साध्य सत्त्वानिर्वाहात् । नच पटवृत्तित्वाभावाश्रयत्वसम्बन्धेन तत्पटत्ववदभावमादाय व्यधिकरणधर्मावच्छिन्नाभावानुपगमेऽपि दृष्टान्ते साध्योपपत्तिः, पक्षेच तादृशाभावप्रतियोगित्वबाधेन स्वाश्रयत्वसम्बन्धेन तत्पटत्ववदभावमादायैव साध्यमुपपादनीयमिति वाच्यम् ;— विषयितया एतत्पटत्ववतो ज्ञानस्य संयोगेन योभावस्तादृशाभावप्रतियोगित्वस्यैतत्पटे सिद्धिमादायार्थान्तरवारणाया वच्छेदकतायां समवायावच्छिन्नत्वनिवेशस्यावश्यकत्वेन दृष्टान्ते साध्यवैकल्यध्रौव्यात् । नचैतत्पटत्वमेतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकमंशिवृत्तित्वाद्घटत्वादिवदित्यत्र तात्पर्यान्न दोष इति वाच्यम् ;— कम्बुग्रीवादिमत्त्वादौ व्यभिचारात् ; गुरोरनवच्छेदकत्वात् । प्रतियोगितावच्छेदकत्वे सतीति हेतुविशेषणेऽपि तत्र व्यभिचारतादवस्थ्यात, कम्बुग्रीवादिमत्त्वस्य विषयितासम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वात् । अयं घट इत्यादिज्ञानेऽपि कम्बुग्रीवादिमत्त्वावच्छिन्नविषयितासम्बन्धावच्छिन्नाभावसत्त्वेन तादृशाभावप्रतियोगितायां घटत्वादेरवच्छेदकत्वासम्भवात । तत्प्रतियोगिताव्यापकत्वे सति तत्प्रतियोगितानिरूपकाभाववद्वृत्तितानवच्छेदकत्वस्यैव सम्भवति लघावित्यत्र सम्भवत्त्वरूपत्वात् । तादात्म्यसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वे सतीति हेतुविशेषणेऽपि तद्दोषतादवस्थ्यम् ; भवन्मते विषयितायाश्चैत्यतादात्म्यरूपत्वात् । एवं साध्यप्रविष्टप्रतियोगितायां तादात्म्यसम्बन्धावच्छिन्नत्वनिवेशे एतत्तन्तुसंयुक्तपटे व्यभिचारशङ्काया अनुत्थितिः । तादात्म्यवतत्सम्बन्धान्तरावच्छिन्नाभावमादाय सिद्धसाधनञ्च । तादात्म्यसम्बन्धनिष्ठा या सम्बन्धविधया अवच्छेदकता तादात्म्यनिष्ठसम्बन्धानवच्छिन्नावच्छेदकतारूपा तन्निरूपकत्वस्य निवेशेऽपि तादात्म्यसंयोगोभयसम्बन्धावच्छिन्नाभावस्याव्यावृत्तेः । तादात्म्यातिरिक्तसम्बन्धानवच्छिन्नत्वनिवेशेऽपि स्वाश्रयंतादात्म्यसम्बन्धावच्छिन्नाभावस्यान्यानुयोगिक-

तादात्म्यसम्बन्धावच्छिन्नाभावस्य चाऽव्यावृत्त्या सिद्धसाधनं दुर्वारम् । तादात्म्यत्वातिरिक्तधर्मानवच्छिन्नतादात्म्यनिष्ठावच्छेदकतानिवेशेऽपि स्वरूपतोऽन्यानुयोगिकतादात्म्यनिष्ठावच्छेदकतामादाय दोषो दुर्वारः । किंचान्यासमवेतस्यांशित्वमेतत्तन्तुसमवेतत्वं विना न युक्तमिति विरुद्धो हेतुः ।

यदप्येतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वेऽपि एतत्तन्तुसमवेतत्वस्य सम्भवान्न विरोधः, नह्येतत्तन्तुनिष्ठात्यन्ताभावाप्रतियोगित्वमेतत्समवेतत्वे प्रयोजकम्, परमते केवलान्वयिधर्ममात्रस्यैव तत्समवेतत्वापत्तेः, किन्त्वेतन्निष्ठप्रागभावप्रतियोगित्वम्, तच्चैतन्निष्ठात्यन्ताभावप्रतियोगित्वेऽपि न विरुद्धमिति । तन्न, एतत्तन्तुनिष्ठात्यन्ताभावाप्रतियोगित्वस्यैतत्तन्तुसमवेतत्वव्यापकतया व्यापकाभावाद्व्याप्याभावे आपादिते व्यापकताखण्डनस्य युक्तत्वेन तदपहाय केवलान्वयिधर्मे व्यभिचारादुक्तात्यन्ताभावाप्रतियोगित्वस्य एतत्तन्तुसमवेतत्वव्याप्यत्वं नसम्भवतीति खण्डनस्य अयुक्तत्वात् ।

यदपि नह्येतत्तन्तुनिष्ठेत्यादिग्रन्थस्समव्यापकताखण्डनपरः, प्रयोजकमित्यस्य समव्यापकमित्यर्थादिति तद्ग्रन्थसङ्गमनम् । तदपि न, समव्यापकताखण्डनस्यानवसरग्रस्तत्वात्, परोक्तापत्तिहेतुभूतव्यापकताखण्डनस्यैव आवश्यकत्वात् । समव्यापकताघटकव्यापकत्वाखण्डनेन तत्परत्वासम्भवाच्च । एवमेतन्निष्ठात्यन्ताभावाप्रतियोगित्वमेतन्निष्ठसमवायसम्बन्धावच्छिन्नाभावाप्रतियोगित्वं वाच्यम्, अन्यथा सर्वस्यापि सम्बन्धान्तरावच्छिन्नाभावप्रतियोगित्वेनाप्रसिद्ध्यापत्तेः, तथाच प्रमेयत्वादौ व्यभिचारोक्त्यसङ्गतिः । एवमेतन्निष्ठप्रागभावप्रतियोगित्वस्यैतन्निष्ठात्यन्ताभावप्रतियोगित्वेनाविरोधकथनमसङ्गतम्, अत्यन्ताभावप्रागभावयोर्विरोधात् ।

यत्तु— अत्यन्ताभावप्रागभावयोर्विरोधस्तु दीधितावेव निरस्तः— " अन्तराश्यामे रक्तं रूपं नास्तीति प्रत्ययात्, तस्य प्रागभावादिविषयत्वे पूर्वापररक्तिमध्वंसप्रागभाववति मध्यरक्तेऽपि तथा प्रत्ययप्रसङ्गादिति ।"

तत्र, अतिरिक्तात्यन्ताभाववादिमते रक्ततादशायां तादृशात्यन्ताभावसत्त्वेपि प्रतियोग्यनधिकरणकालावच्छिन्नस्वरूपस्य सम्बन्धतया तदभावात्तादृश प्रत्ययाभावात् । भाचां ध्वंसप्रागभावयोरेव सामान्यधर्मावच्छिन्नप्रति योगिताकतया तादृशप्रतीतिविषयत्वेपि सामान्यधर्मावच्छिन्नप्रतियोगिताका भावत्वविशिष्टं प्रति तादृशस्वरूपस्यैव सम्बन्धत्वकल्पनेनोक्तापत्तिविरहात् । उक्तयुक्त्या रक्तप्रागभाववति तदत्यन्ताभावसिद्धावपि पटप्रागभाववति तद-त्यन्ताभावासिद्धेश्च । प्रागभावहेतुतया पटत्वावच्छिन्नप्रतियोगिताका भावत्वविशिष्टस्योक्तस्वरूपसम्बन्धेन हेतुतयैव वा पटवति पटोत्पत्तिवारणा त्तदर्थमत्यन्ताभावहेतुत्वानावश्यकत्वात् । पटत्वाद्यवच्छिन्नाधिकरणे पट-त्वाद्यवच्छिन्नप्रतियोगिताकाभावसिद्धिमात्रेण मिथ्यात्वनिर्वाहे तदर्थं प्राग-भावाधिकरणेऽत्यन्ताभावसाधनस्य विफलत्वाच्च ।

अत्रकेचित्– अयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी न, एत-त्तन्त्वारब्धत्वात्, व्यतिरेकेण पटान्तरवदिति प्रतिरोधः; नचाप्रसिद्ध विशेषणत्वम्, एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं किञ्चिन्निष्ठात्यन्ताभाव प्रतियोगि- संसर्गाभावप्रतियोगित्वव्याप्यत्वात्प्रागभावप्रतियोगितावदिति सामा न्यतस्तत्प्रसिद्धेरिति वदन्ति ।

यत्तु— किञ्चिन्निष्ठेत्याद्यनुमानं न सम्भवदुक्तिकम्, संसर्गाभाव प्रतियोगित्वस्यैव तादात्म्येन हेतुत्वसम्भवेन व्याप्यत्वांशवैयर्थ्यात्; किञ्च यदि व्याप्यत्वं येन केनचिद्रूपेणोच्यते तदा आकाशाभावस्यापि घटादि वृत्तित्वविशिष्टत्वेन संसर्गाभावप्रतियोगित्वव्याप्यत्वात्तत्र चात्यन्ताभावप्रति योगित्वाभावाद्व्यभिचारः; अत्यन्ताभावप्रतियोगितात्वेन तदुक्तौ साधन वैकल्यम्, संसर्गाभावप्रतियोगितात्वेन तदुक्तौ स्वव्यापक साध्यसमानाधिकरणवृत्तिहेतुतावच्छेदकरूपाव्याप्यरूपे साधने संसर्गाभाव

प्रतियोगितात्वस्य प्रविष्टत्वेन तस्यैव हेतुतावच्छेदकत्वसम्भवादितरांशवैय र्थ्यमिति । तन्न, संसर्गाभावप्रतियोगितात्वावच्छिन्नाभाववद्वृत्तित्वविशिष्टस्यैव तद्व्याप्यत्वादित्यनेन विवक्षितत्वेन वैयर्थ्याभावात् । स्वसमानाधिकरण व्याप्यतावच्छेदकधर्मान्तराघटितस्यैव व्याप्यतावच्छेदकत्वमित्यत्र स्वसमानाधिकरणपदेन स्वव्यापकत्वस्यैव विवक्षितत्वेन संसर्गाभावप्रतियोगित्वस्य उक्तव्याप्यत्वे घटकत्वेपि तद्व्यापकत्वाभावात् । अन्यथा वह्निमदन्यावृत्तित्वस्य वह्निव्याप्यतावच्छेदकत्वानुपपत्तेः ।

यदपि— यत्रैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं तत्रैतत्तन्त्वारब्धत्वाभाव इति व्यतिरेकव्याप्तावेतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वस्योपाधित्वान्न सत्प्रतिपक्षता , एतत्तन्त्वारब्धत्वाभावव्यापकस्य एतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वस्यैतत्तन्त्ववच्छिन्नचिदुपादानकप्रातिभासिकसर्पादौ एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाव्यापकत्वात ; एतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वमित्यत्रैतत्तन्तुपदेनैतत्तन्त्ववच्छिन्नाचित एव ग्रहणात्तन्निष्ठप्रागभावाप्रतियोगित्वस्य प्रातिभासिकसर्पादावभावात् उक्तव्यतिरेकव्याप्तौ तादृशसर्पे व्यभिचारस्य दुर्वारत्वादिति । तन्न, प्रातिभासिकान्यत्वे सत्येतत्तन्त्वारब्धत्वस्यैव प्रतिहेतुतया विवक्षितत्वेन तदभावस्य तन्त्ववच्छिन्नचिदुपादानक सर्पादिसाधारणतया एतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वस्य तद्व्यापकत्वाभावे नोपाधित्वासम्भवात् । उक्तप्रतियोगित्वरूपसाध्याभाववति सर्पे निरुक्तहेत्वभावस्यापि सत्त्वेन व्यभिचाराभावाच्च । नच एतत्तन्तुनिष्ठप्रागभावप्रतियोगित्वप्रातिभासिकान्यत्वोभयाभावस्य उक्तहेत्वभावव्यापकस्य पक्षावृत्तेः पक्षवृत्तितया सन्दिह्यमानैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाव्यापकत्वादुपाधित्वं दुर्वारमिति वाच्यम् ;– साध्यासमानाधिकरणधर्मवदसाधनवन्निष्ठाभावप्रतियोगितावच्छेदकसाध्यसमानाधिकरणवृत्तियोधर्मस्तद्वत्त्वरूपस्य दी-

धितिकाराद्युक्तस्योपाधिलक्षणस्य तत्राभावेन तस्योपाधित्वासम्भवात् । साधनवत्तया निश्चिते साध्यासमानाधिकरणधर्मवत्त्वाभावात् । साध्या समानाधिकरणधर्मवत्त्वसाधनवत्तया सन्दिह्यमानस्यापि तल्लक्षणघटकत्वे पृथिवी इतरेभ्यो भिद्यत इत्यादौ पाकजरूपाभावादेरप्युपाधितापत्त्या व्यतिरेकघुच्छे- दापत्तेः ; पृथिवीत्वाभावव्यापकस्य पक्षावृत्तेः पाकजरूपाभावस्य पक्षवृत्ति तया सन्दिह्यमानपृथिवीतरत्वाव्यापकत्वात् । वस्तुतस्तु पूर्वोक्तस्थापनानु माने सिद्धसाधनं दुर्वारम् , सिद्धान्ते अवयवातिरिक्तावयव्यनङ्गीकारेण असमवायिकारणतया ऽभिमतसंयोगविशेषविशिष्टतन्तोरेव पटशब्दार्थतया तत्र तन्तुनिष्ठाभावप्रतियोगित्वाक्षतेः । विलक्षणसंयोगस्य पूर्वमसिद्धत्वेन तदर्थं कारकव्यापारस्य सार्थक्येनाभेदेऽपि कार्यकारणभावनिर्वाहात् । प्रप- ञ्चितं चेदं सिद्धान्तसिद्धाञ्जने । एवमंशित्वादित्यनेनावयवसमवेतत्वावय- वजन्यत्वयोर्विवक्षणे मन्मते ऽसिद्धिः । अवयवसमुदायत्वविवक्षणे तु वैय र्थ्यम् , अपेक्षाबुद्धिविशेषविषयत्वरूपसमुदायत्वघटकविषयत्वमात्रस्यैव तथा त्वसम्भवात् । किञ्च मिथ्यात्वघटकाभावस्य तात्त्विकत्वे "एकमेवाद्वितीय" मिति श्रुतिविरोधः ।

यत्तु— तादृशश्रुतेर्ब्रह्मभिन्नभावशून्यत्वमर्थः, अभावरूपा धर्मा नाद्वैतं निघ्नन्तीति मण्डनोक्तेः, तादृशश्रुतेरखण्डार्थकत्वाद्वा न विरोधः; नचैवं तादृशाभावस्य तात्त्विकत्वन्न सम्भवति, तत्त्वावेदकप्रमाणवेद्यत्वाभा- वाच्छ्रुतेरेव तत्त्वावेदकत्वादिति वाच्यम् ,— मिथ्यात्वानुमाने स्वसमानाधि करणस्वाधिकसत्ताकात्यन्ताभावस्य मण्डनमते साध्ये निवेशेन तस्यैव तत्त्वा- वेदकत्वात् ; तात्त्विकद्वैताभावविषयकत्वादेव हि तस्य द्वैतग्राहिप्रत्यक्षादि बाधकत्वमिति मण्डनाभिप्रायात् ; किञ्च तत्त्वज्ञानोद्देशेन मुमुक्षूणां प्रवृत्ते स्तत्त्वज्ञानकार्योऽविद्याध्वंसस्तात्त्विको वाच्यः, तस्य मिथ्यात्वे तत्त्वज्ञान बाध्यत्वेन तत्कार्यत्वानुपपत्तेः, एवञ्च मिथ्यात्वघटकोऽत्यन्ताभावो अविद्या

ध्वंसश्च गण्डनगते तात्त्विको न स्वभावान्तरमिति । तन्न, अभावस्य सत्यत्वे तत्राभावत्वतत्सम्बन्धतदधिकरणत्वानां ब्रह्मणि चाभावसम्बन्धतदनुयोगित्वयोरवश्यं वाच्यतया भावाद्वैतस्यापि दुर्लभत्वापत्तेः । नचाभावत्वतत्सम्बन्धादेराश्रयरूपत्वान्न दोष इति वाच्यम् ;— स्वं न स्वीयमित्याद्यनुभवात्स्वस्य स्वसम्बन्धत्वे आत्माश्रयापत्तेश्च स्वरूपस्य सम्बन्धत्वासम्भवात् । अन्यथा गुणगुण्यादिस्थलेऽपि स्वरूपस्य सम्बन्धत्वापत्तौ भवतान्तादात्म्यविलोपप्रसङ्गात् । किञ्चाभावस्य सत्यत्वे ब्रह्मप्रमेत्यादिपक्षतावच्छेदकाक्रान्ते तत्र साध्याभावाद्बाधः । अभावान्यत्वस्यापि पक्षतावच्छेदकगर्भे निवेशे च जीवब्रह्मभेदादेर्मिथ्यात्वासिद्ध्या भेदवादापत्तिः । अनुमानान्तरेण तत्र मिथ्यात्वसाधने ऽप्युक्तानुमाने दृश्यत्वादेः पारमार्थिकाभावे व्यभिचार । अभावान्यत्वस्य हेतुकोटावपि निवेशे चाप्रयोजकता, मिथ्यात्वाभावेऽप्यभावादौ दृश्यत्वाद्युपपत्तिवत् पक्षेपि तदुपपत्त्या वक्ष्यमाणतर्काणामनवकाशात् । अपिचानुमानवेद्यस्याभावस्य पारमार्थिकतां स्वीकृत्याद्वितीयश्रुतिसङ्कोचाङ्गीकर्तॄणां शास्त्रप्रमितकल्याणगुणानामपि पारमार्थिकत्वाङ्गीकारस्य युक्तत्वात्, उत्सर्गापवादन्यायेन निषेधस्य तदतिरिक्तपरत्वसम्भवादिति ।

इति शेषकुलतिलकस्यानन्ताचार्यस्य कृतौ न्यायभास्करे

अंशित्वहेतुभङ्ग एकादशः ।

---

## अथनिरुपाधिकत्वभङ्गो द्वादशः ।

सोपाधिकाश्च दृश्यत्वादयः, स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वं स्वबाधकाभिमताबाध्यबाधकं प्रति निषेध्यत्वेन विषयत्वं चेत्युपाधिसम्भवात । यत्रोपाधिस्साध्यः स स्वपदार्थः । शुक्तिरूप्यादेः स्वपदेन ग्रहणे तद्बाधकत्वेनाभिमतमियंशुक्तिरित्यादिज्ञानं तदबाध्यदोषश्च सादृश्यादि स्तत्प्रयुक्तविषयताश्रयत्वस्य शुक्तिरूप्यादौ सत्त्वेन साध्यव्यापकत्वात्, वियदादेः स्वपदेनोपादाने तद्बाधकब्रह्मज्ञानाबाध्यदोषाप्रसिद्ध्या तदुपादानासम्भवेन शुक्तिरूप्यादौ प्रसिद्धस्य तस्य वियदादिसाधारणसाधनाव्यापकत्वात् । एवं स्वबाधकशुक्तिज्ञानाबाध्यबाधकं नात्ररजतमित्यादिज्ञानं तादृशबाधकं प्रति निषेध्यत्वेन शुक्तिरूप्यादेर्विषयत्वेन साध्यव्यापकत्वात्, आकाशादिबाधकविषयश्चाकाशादेर्बाधक ब्रह्मज्ञानबाध्यत्वादाकाशादावुक्तोपाध्यभावेन साधनाव्यापकत्वात् । यद्यप्युक्तोपाधिद्वयस्य द्वैतमते न प्रसिद्धिसम्भवः, शुक्तिरूप्यादेरनिर्वचनीयस्यानङ्गीकारात्, तथापि पररीत्यैवोपाधिकथनान्नाप्रसिद्धिः । हेतावुभयमतेऽप्यदुष्टत्वस्य वक्तव्यत्वेन पररीत्यापि दोषस्य वारणीयत्वात् । केवलं दोषप्रयुक्तभानत्वस्य बाधकज्ञानं प्रति निषेध्यत्वेन विषयत्वस्य च तन्मते प्रपञ्चसाधारणत्वेन साधनाव्यापकत्वासम्भवात्स्वबाधकाभिमताबाध्यत्वं विशेषणम् । द्वैतवादिना शुक्तिरूप्यादेर्बाधकास्वीकारात्तन्मतरीत्या नोपाधिसम्भव इति सूचनायाभिमतेत्युक्तम् । नच स्वत्वस्यानुगतस्याभावेन सकलप्रातिभासिकसाधारणानिष्ठाव्यापकत्वान्नोक्तोपाधेस्सम्भवतीति वाच्यम्; स्वबाधकबाध्यत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदताकभेदवद्दोषप्रयुक्तविषयत्वतादात्म्योभयसम्बन्धेन किञ्चिद्विशिष्टत्वस्य तादृशभेदवद्बाधकज्ञाननिरूपितप्रतियोगितासम्बन्धावच्छिन्नप्रकारत्वतादात्म्योभयसम्बन्धेन किञ्चिद्विशिष्टत्वस्य चोपाधित्वे तात्पर्यात्स्वत्वस्याननुगतत्वेऽपि क्षतिविरहात् ।

एतेन स्वबाधकेत्यादौ स्वबाधकबाध्यत्वं यदि स्वजनकाज्ञाननिवर्तकनिवर्त्यत्वं, तदा जनकत्वस्यावच्छेदकघटितत्वाच्छुक्त्यवच्छिन्नाचिद्विषयकाज्ञानत्वादिरूपावच्छेदकभेदेन भिन्नत्वान्निवर्तकत्वघटकनिवृत्तिजनकत्वस्य च शुक्तित्वप्रकारकेदंविशेष्यकत्वादिरूपावच्छेदकभेदेन भिन्नत्वादननुगमः, न हि स्वत्वस्याननुगतत्वेपि तदनुगमसम्भवः, द्रव्यजनकत्वेन रूपेण कपालत्वतन्तुत्वाद्यवच्छिन्नजनकतानामनुगमापत्तेः, तथाच नोक्तोपाधेस्साध्यव्यापकतेति निरस्तम्; शुक्तिरूप्यादेरुपाधित्वे तज्जनकताया एव संसर्गत्वेन प्रविष्टतया जनकतानामननुगतत्वेपि क्षतिविरहात् । सम्बन्धाननुगमस्यादोषत्वात् । अन्यथासिद्ध्यनिरूपकतावच्छेदकानियतपूर्ववृत्तितावच्छेदकधर्मवत्त्वरूपजनकतानामवच्छेदकभेदेपि तादृशधर्मत्वेनानुगमसम्भवात, स्वावच्छेदकाघटितस्याखण्डोपाधिरूपस्य जनकत्वस्य तत्त्वस्य वा सम्भवाच्च । कपालत्वतन्तुत्वाद्यवच्छिन्नजनकतानां च द्रव्यजनकतात्वे नानुगम इष्यत एव । अतएव दीधितावयवग्रन्थे प्रकृतानुमितिजनकतावच्छेदकविषयतात्वेनान्वयव्यतिरेकव्याप्तिविषयतयो स्सत्प्रतिपक्षग्रन्थे च विरोध्यनुमितिजनकतात्वेन नानाविधव्याप्तिजनकतानां चानुगमः कृतः ।

यदपि तूलाज्ञानास्वीकारपक्षे शुक्तिरूप्याद्युपादानभूतब्रह्माज्ञाननिवर्तकब्रह्मज्ञानाबाध्यदोषाप्रसिद्ध्या उक्तोपाधिर्न सम्भवतीति । तन्न, तूलाज्ञानाङ्गीकारेणैव उक्तोपाधिकथनात् । तूलाज्ञानाङ्गीकारे तु स्वनिष्ठविषयताप्रयोजकदोषप्रयोज्यविषयताश्रयान्यत्वं स्वबाधकाभिमताबाध्यत्वम्, शुक्तिरूप्यनिष्ठविषयताप्रयोजकसादृश्यादिरूपदोषप्रयोज्यविषयताश्रयत्वस्य सादृश्यादिरूपदोषे अभावात्तादृशदोषप्रयोज्यविषयतावत्त्वस्य साध्यव्यापकत्वात्, घटादिनिष्ठविषयताप्रयोजकाविद्यारूपदोषप्रयोज्यविषयताश्रयत्वस्याविद्यारूपदोषसाधारण्यात्तदन्यदोषप्रयोज्यविषयतावत्त्वविरहेण घटादौ साधनाव्यापकत्वेनोपाधित्वसम्भवात् । अथवा तूलाज्ञानास्वीकर्तृमते अविद्याति

रिक्तदोषप्रयोज्य— विषयतावत्त्वमुपाधिः, तस्य शुक्तिरूप्यादौ साध्यव्यापकत्वा द्घटादौ साधनाव्यापकत्वात् । देहात्मैक्यादावविद्यातिरिक्तदोषाभावे तत्र साध्यव्यापकत्वाभावेन तस्योपाधित्वासम्भवे तु स्वमिथ्यात्वनिश्चयानिश्चित मिथ्यात्वकदोषप्रयुक्तभानत्वमुपाधिर्बोध्यम् । न च निश्चयत्वस्य धर्मिता वच्छेदकादिभेदेन नानात्वादननुगम इति वाच्यम् ,— स्वावच्छिन्नप्रति बन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्व स्वसामानाधिकरण्योभयसम्बन्धेन विषयताविशिष्टविषयताशून्यत्वरूपानुगतनिश्चयत्वस्यैव निवेशात् । अन्यांशे संशयानात्मकमिथ्यात्वनिश्चयमादायैवोपाध्युपपादनसम्भवेनान्यांशे संशया त्मकस्य मिथ्यात्वनिश्चयस्यासंग्रहेऽपि क्षतिविरहात् । यद्वा प्रकारितान्तरानव- च्छिन्नमिथ्यात्वनिरूपितप्रकारिताकत्वमेवानुगतं मिथ्यात्वनिश्चयत्वम्, संशये कोटिद्वयीयप्रकारतयोरवच्छेद्यावच्छेदकभावस्य सत्प्रतिपक्षग्रन्थसिद्धत्वात् । जातेरव्याप्यवृत्तितास्वीकर्तृमिश्रादिमते तु संशयत्वजात्यनवच्छेदकामिथ्यात्व विषयिताकत्वमेव मिथ्यात्वनिश्चयत्वम् । स्पष्टं चेदं केवलान्वयिग्रन्थगादा धर्याम् । वस्तुतस्तु सन्देह्मीत्याकारकप्रतीतिसिद्धो विषयताविशेषस्संशयत्व मित्यस्य स्वयमेवाभ्युपगततया मिथ्यात्वनिष्ठतादृशविषयताभिन्नविषयताकत्व मेव मिथ्यात्वनिश्चयत्वमिति सम्भवादननुगमकथनं स्वाभ्युपगमविरुद्धम् ।

यदपि नेहनानेति श्रुत्यादिजन्यनिश्चयेनेश्वरीयनिश्चयेन च दृश्य मात्रस्य मिथ्यात्वेन निश्चितत्वादतादृशदोषाप्रसिद्धिरिति । तन्न; नेहनानेति श्रुतिजन्यबोधस्य ईश्वरीयज्ञानस्य च मिथ्यात्वनिश्चयरूपत्वासिद्धेः । सिद्धावपि दोषभिन्नयत्स्वभिन्नं तदविशेष्यकमिथ्यात्वनिश्चयानिश्चितमिथ्यात्वकत्वविवक्ष- णेन दोषाभावात्, उक्तश्रुतिजन्यस्येश्वरीयस्य च निश्चयस्य दोषभिन्नस्वभिन्न विशेष्यकत्वेन तदविशेष्यकत्वाभावात् । स्वभिन्नाविशेष्यकमिथ्यात्व- निश्चयानिश्चितमिथ्यात्वकदोषप्रयुक्तभानत्वस्य घटादावपि सत्त्वात्साधना व्यापकत्वनिर्वाहाय दोषभिन्नेति । स्वभिन्नं यद्दोषभिन्नमीश्वरः तदविशेष्य

केण घटाविषये मिथ्येत्यादिनिश्चयेनाधिष्ठानरूपदोषमिथ्यात्वन्निश्चितमिति साधनाव्यापकत्वानिर्वाहात् ।

यदप्युक्तरूपस्योपाधित्वन्न सम्भवति, शुक्तिरूप्यतज्ज्ञापकदोषौ मिथ्येत्यादिनिश्चयमादाय साध्याव्यापकत्वात्, यत्र प्रातिभासिकान्तराविशेष्यकस्वविशेष्यकमिथ्यात्वज्ञानन्न जातं तत्र साध्याव्यापकत्वाच्चेति । तन्न, सर्वांशे प्रमात्वेनोभयमतसिद्धत्वस्य तादृशनिश्चये विशेषणत्वात्, शुक्तिरूप्यतज्ज्ञापकदोषौ मिथ्येति निश्चयस्य प्रातिभासिकमात्रमिथ्यात्ववादिमते ज्ञापकमिथ्यात्वांशे भ्रमत्वात् तादृशनिश्चयवारणात्; स्वभिन्नं यद्दोषाभिन्नं तदविशेष्यकत्वस्थाने स्वाभावाविशेष्यकत्वस्य निवेशेन नेहनानेत्यादि श्रुत्यादिजन्यबोधवारणस्य प्रातिभासिकान्तराविशेष्यकयत्किञ्चित्प्रातिभासिकविशेष्यकमिथ्यात्वनिश्चयसंग्रहस्य च सम्भवात् ।

यदपि दोषत्वस्य सकलदोषानुगतस्यैकस्याभावादेकैकदोषस्य दोषत्वेन निवेशे तत्प्रयुक्तभानत्वस्य न साध्यव्यापकतासम्भवः, अन्यतमत्वेन रूपेण दोषाणां निवेशे अनन्तदोषघटितान्यतमत्वस्य दुर्ज्ञेयत्वापत्तिः, तावदन्यतमत्वव्यक्तेः स्वरूपतो निवेशात्सुज्ञेयत्वेऽप्यविद्यान्यदोषाणामेव तावदन्यतमत्वरूपेण निवेशसम्भवेनाबाध्यान्तवैयर्थ्यापत्तिः; तेन रूपेण साध्यव्यापकताग्राहकतर्काभावश्च, अन्यथा प्रातिभासिकानामन्यतमत्वेनैव रूपेण तादात्म्यसम्बन्धेनोपाधित्वस्यापत्तिः; किञ्च स्वाप्नादिभ्रमे प्रातीतिकदोषस्यापि सम्भवेन तस्य स्वबाधकजाग्रदादिबाध्यत्वेन साध्यव्यापकत्वहानिश्चेति। तदपि न, भ्रमत्वावच्छिन्नजन्यतानिरूपितजनकतावत्त्वेन दोषाणामनुगमात्। उक्तं हि प्रत्यक्षमणिदीधितौ— "भ्रमत्वावच्छिन्नकार्यतानिरूपितकारणताशालित्वं च दोषत्वमि" ति । अव्याप्यवृत्तिजातिस्वीकर्तृमिश्रादिमते भ्रमत्वस्याव्याप्यवृत्तित्वेऽपि जातिरूपतासम्भवेन तस्याप्यनुगतत्वात् ।

जातेरव्याप्यवृत्तित्वास्वीकारेपि स्वप्रतियोगिनिष्ठत्वस्वानुयोगिनिष्ठविशेष्यतानिरूपितत्वस्वावच्छिन्नत्वैतत्त्रितयसम्बन्धेन सम्बन्धविशिष्टान्यप्रकारताश्रयत्वरूपस्यानुगतभ्रमत्वस्य गदाधरेणैव हेतुग्रन्थे निर्वचनात् । अन्यथाख्यात्यस्वीकर्तॄणां निरूप्यनिरूपकभावापन्नविषयताकज्ञानद्वयस्य भ्रमरूपत्वाङ्गीकर्तॄणां सिद्धान्तिनाम्मतेपि स्वनिरूपकज्ञाननिरूपितत्वस्वनिरूपितत्वोभयसम्बन्धेन विषयताविशिष्टविषयतावज्ज्ञानत्वं भ्रमत्वमित्यनुगमप्रकारस्यास्माभिर्ज्ञानबाधार्थ्यवादे प्रदर्शितत्वात् । सद्विविक्तत्वरूपमिथ्यात्वविचारे भ्रमत्वस्य जातिरूपतायास्तदवच्छिन्नजनकत्वेन दोषानुगमस्य च भवत्त्रैवोक्तत्वेनात्रानुगमोक्तेः सन्दर्भविरुद्धत्वाच्च । अन्यतमत्वेनापि दोषाणामनुगमसम्भवः, अन्यतमत्वस्य च स्वरूपतो भानाङ्गीकारेण दुर्ज्ञेयताविरहात् । नचैवं व्यक्त्यन्यतमत्वेनैवानुगतप्रतीत्युपपत्त्यावतिरिक्तजात्यसिद्ध्यापत्तिरिति वाच्यम् ;- इष्टत्वात् , सिद्धान्तेतिरिक्तजातेरनङ्गीकारात् । नचाविद्यान्यदोषाणामेवान्यतमत्वेन निवेशसम्भवेनाबाध्यान्तवैयर्थ्यमिति वाच्यम् ,- अविद्यातिरिक्तदोषमात्रनिष्ठान्यतमत्वघटितोपाधावबाध्यान्तस्यानिवेशात् , अविद्यासाधारणतद्घटितोपाधावेव तन्निवेशात् , अविद्यासाधारणान्यतमत्वतदतिरिक्तदोषमात्रनिष्ठान्यतमत्वयोर्भेदात् , अबाध्यान्ताघटिततादृशान्यतमत्वघटितस्य लघोरुपाधित्वसम्भवेपि प्रकृते वैयर्थ्यानवकाशात् । न च तादृशलघुरूपस्योपाधित्वासम्भवः, तेन रूपेण साध्यव्यापकताग्राहकतर्काभावात् , अन्यथा प्रातिभासिकानामन्यतमत्वेनोपाधित्वापत्तिरिति वाच्यम् ;— सत्ताया विशिष्टसत्तायाश्च द्रव्यत्वव्यापकताग्राहकतर्कवद्दोषजन्यज्ञानविषयत्वाविद्यान्यदोषजन्यज्ञानविषयत्वयोरपि तत्सम्भवात् । प्रातिभासिकानामन्यतमत्वेनोपाधित्वस्येष्टत्वात् । देहात्मैक्यातिरिक्तदोषाभावे अविद्यातिरिक्तदोषनिष्ठान्यतमत्वघटितस्योपाधित्वासम्भवस्त्विष्ट एव , देहात्मैक्ये साध्यव्यापकताभङ्गात् । तदानीमबाध्यान्तघटितस्यैव तत्साधारण्येन उपाधित्वसम्भवात् । स्थाणावादिभ्रमे प्रातीतिकदोषस्य सम्भवेपि

यत्किञ्चिन्निद्राविद्यादिदोषस्य व्यावहारिकस्य स्वाप्नबाधकाबाध्यस्य सम्भवेन तमादायैवोपाधेस्तत्रोपपादनीयत्वात् । तथा च दृश्यत्वानुमाने उक्तोपाधिद्वयं दुर्वारम् । अस्य चोपाधिद्वयस्य विपक्षाद्ब्रह्मणस्तुच्छाच्च व्यावृत्तत्वात्साध्यसमव्याप्तस्यैवोपाधित्वमित्युदयनमतेऽप्युपाधित्वनिर्वाहः । निरुक्तोपाधिसाध्ययोर्व्यतिरेकव्याप्तिसत्त्वाच्च साध्याभावव्याप्यस्वाभावकत्वे सति साधनाव्यापकत्वमुपाधित्वमिति मतेपि नानुपपत्तिः ।

यत्तु ब्रह्मज्ञानमात्रबाध्ये देहात्मैक्ये मिथ्याभूते साध्याव्यापकत्वान्नानयोरुपाधित्वसम्भव इति । तन्न, नेदं रजतमिति प्रत्यक्षस्य शुक्तिरूप्यबाधकतावन्नाहं देह इति प्रत्यक्षस्यैवाप्रामाण्यज्ञानानास्कन्दितस्य देहात्मैक्यबाधकतया तदबाध्याविद्यादिरूपदोषप्रयुक्तभानत्वस्य तत्र सत्त्वात्साध्यव्यापकतानिर्वाहात् । तस्य ब्रह्मज्ञानमात्रबाध्यत्वे प्रमाणाभावात् । अन्यथा तस्यापि ब्रह्मप्रमान्याबाध्यत्वेन पक्षान्तर्भावापत्त्या सिद्धसाधनस्य दुर्वारत्वात् ।

यदपि—पर्वतावयववृत्त्यन्यत्वादिवत्साधनवत्पक्षमात्रव्यावर्तकविशेषणवत्त्वेन पक्षेतरत्वतुल्यत्वान्नानयोरुपाधित्वसम्भवः ; उक्तं हि मणौ "न हि पक्षेतरत्वे स्वव्याघातकत्वेनानुपाधौ उपाधिलक्षणस्यातिव्याप्तिः, तत्रानुकूलतर्काभावेन व्यापकत्वानिश्चयात् , बाधोन्नीते च तर्कोऽस्त्येव ; एवं पर्वतावयववृत्त्यन्यत्वादिकन्नोपाधिः पक्षमात्रव्यावर्तकविशेषणवत्त्वा" दिति ; तथा च पक्षेतरत्वतुल्यत्वेन पर्वतावयववृत्त्यन्यत्वादेर्यथोक्तमणिवाक्येनुपाधित्वमुक्तं तथा तत्सदृशयोः स्वबाधकेत्याद्युपाध्योरपीति । तन्न; अबाध्यान्तविशेषणस्य वासनादिदोषप्रयुक्तविकल्पविषयादलीकरूपाद्विपक्षाद्व्यावर्तकत्वेन पर्वतावयववृत्तित्वविशेषणस्य च पर्वतावयवरूपादितो विपक्षाद्व्यावर्तकत्वेन दृष्टान्तदार्ष्टान्तिकयोरुभयोरपि साधनवत्पक्षमात्रव्यावर्तकविशेषणवत्त्वा

भावात् । न च साधनवत्पक्षमात्रव्यावर्तकत्वन्नाम साधन-वद्विपक्षाव्यावर्तकत्वम् , साधनवद्विपक्षनिष्ठभेदप्रतियोगितावच्छेदकतायां अनवच्छेदकं यद्विशेषणं तद्घटितत्वपर्यवसितम् , तथा च पर्वतावयव वृत्त्यादिकं विशेषणमन्यत्वादिनिष्ठाया उक्तावच्छेदकताया अनवच्छेदकमिति न तद्घटितस्योपाधित्वम् , साधनवद्विपक्षे अयोगोळकादौ पर्वतावयव वृत्त्यन्यत्वादिमते भेदासत्त्वात् , आर्द्रेन्धनविशेषणस्यार्द्रत्वस्य च साधन वदयोगोळकानिष्ठभेदप्रतियोगितावच्छेदकतावच्छेदकत्वात्तद्घटितस्योपाधित्व-सम्भवादिति वाच्यम् ;— तथासति प्रकृते साधनवद्विपक्षाप्रसिद्ध्या प्रकृतोपाध्योस्तन्निष्ठभेदप्रतियोगितावच्छेदकतानवच्छेदकविशेषणघटितत्वस्या-सम्भवेन उपाधिताया दुर्वारत्वात् । न च यद्विशेषणघटितस्य यस्योपाधेराश्रयाद्भिन्ने धर्मिणि प्रकृतसाधनवत्त्वविपक्षत्वोभयाभावोस्ति तत्र तद्विशेषणं साधनवद्विपक्षाव्यावर्तकमित्यबाध्यान्तविशेषणस्यापि तादृशत्वान्नानयोरुपाधितासम्भव इति वाच्यम् ,— प्रकृतानुमाने प्रत्यक्षादिना बाधस्य वक्ष्यमाणतया पक्षस्यैव साधनवद्विपक्षत्वेन तद्व्यावर्तकविशेषणघटितत्वेप्युपाधित्वाविरोधात् । वह्निरनुष्णः कृतकत्वादित्यादौ पक्षे साध्याभाव निश्चयदशायां पक्षेतरत्वस्याप्युपाधित्वेन सर्वसिद्धत्वात् ।

यदपि यद्रूपावच्छिन्नप्रतियोगिताकाभाववत्त्वं साध्याभावव्याप्यता-वच्छेदकं तद्रूपावच्छिन्नस्य साध्यव्यापकत्वनिश्चयादुपाधित्वम् , यथा आर्द्रेन्धनत्वावच्छिन्नाभाववत्त्वस्य धूमाभावव्याप्यतावच्छेदकत्वात्तद्रूपावच्छिन्नस्य तथात्वम् , प्रकृते च स्वबाधकाभिमताबाध्यदोषप्रयुक्तभानत्वत्वावच्छिन्नाभाववत्त्वस्य लघुना दोषप्रयुक्ताभानत्वत्वावच्छिन्नाभाववत्त्वेन व्याप्यतावच्छेदकान्तरेण घटितत्वान्नीलधूमत्वादिवद्व्यापकतावच्छेदकत्वाभावेन न तद्रूपावच्छिन्नस्योपाधितासम्भवः ; एवं द्वितीयोपाधावपि; अत एव शरीर

जन्यत्वाभावत्वस्य न कर्तृजन्यत्वाभावव्याप्यतावच्छेदकत्वं अधुना जन्य-
त्वसामान्याभावत्वरूपव्याप्यतावच्छेदकान्तरेण घटितत्वादित्युक्तं मणाविति।
तदपि न, विशिष्टाभावस्यातिरिक्तत्वेन धर्मिभेदेन वैयर्थ्याभावात् । स्वस-
मानाधिकरणव्याप्यतावच्छेदकान्तरघटितत्वस्यैव व्यर्थविशेषणतारूपत्वात् ।
न च विशेष्यविशेषणाभावयोरेव विशिष्टाभावरूपत्वाद्वैयर्थ्योक्तिनिर्वाह
इति वाच्यम् ,— तथा स्वीकारेऽपि वैयर्थ्यासम्भवात ; स्वसमानाधिकरण
व्याप्यतावच्छेदकान्तरेत्यत्र स्वसमानाधिकरणपदस्य स्वव्यापकपरत्वात् ।
अन्यथा वह्निमान्वह्निमदन्यावृत्तेरित्यादौ वह्निमदन्यावृत्तित्वस्यापि वह्नि
व्याप्यतावच्छेदकत्वानुपपत्तेः । स्वसमानाधिकरणपदस्योक्तार्थपरत्वाभिप्रा-
येणैव सामान्यनिरुक्तौ गदाधरेणाभिहितम्— " तत्तद्धर्मावच्छिन्ननिरूपित
विषयितान्यतमविषयितानिरूपकतावच्छेदकधर्मवत्त्वस्य लक्षणत्वे स्वविक-
विकासकतया विशेषणसार्थक्यमित्यवसेय " मिति ।

यदपि येन विशेषणेन विनापि व्याप्तिः गृह्यते तदेव व्यर्थविशेषण
मिति स्वीकारानुक्तस्थले वैयर्थ्यसम्भवः , अबाध्यान्तविशेषणं विनापि
दोषप्रयुक्तभानत्वमात्रस्य साध्यव्याप्तिग्रहसम्भवात् , उक्तं हि मणौ—
" उक्तस्थले शरीराजन्यत्वे व्यर्थविशेषणत्वम् , लाघवेनाजन्यत्वस्यैव
व्याप्यत्वात् , येन विशेषणेन विना न व्याप्तिर्गृह्यते तस्यैव व्याप्यताव-
च्छेदकत्वनियमात् , अत एव घ्राणेन्द्रियं पार्थिवं रूपादिषु पञ्चसु मध्ये
गन्धस्यैवाभिव्यञ्जकत्वादित्यादौ रूपादिषु मध्ये इत्यसिद्धिवारकमपि
व्यर्थम् , तेन विनापि व्याप्तेर्ग्रहा " दिति । अत्रोच्यते येन विशेषणेन
विना व्याप्तिर्गृह्यते तदेव व्यर्थविशेषणमित्यस्य व्याप्तिग्रहत्वसमानाधिकरण
भेदप्रतियोगितावच्छेदकविषयितानिरूपकतावच्छेदकाव यत्र तत्र व्याप्यता
वच्छेदकत्वाभावः, यथा जन्यत्वाभावः कर्तृजन्यत्वाभावव्याप्य इति ग्रह
शरीरजन्यत्वाभावत्वावच्छिन्ननिरूपितविषयतावैलक्षण्यत्वात् शरीरजन्य

त्वाभाववत्वं न व्याप्यतावच्छेदकमित्यर्थः; स चायुक्तः, वह्निव्याप्यवानिति व्याप्तिग्रहे धूमत्वावच्छिन्नविषयतावच्छेदसत्त्वेन धूमत्वस्यापि व्याप्यतावच्छेदकत्वाभावापत्तेः। न च किञ्चिद्धर्मावच्छिन्नविशेष्यकयद्व्याप्तिग्रहत्व समानाधिकरणभेदप्रतियोगितावच्छेदकविषयितानिरूपकतावच्छेदकत्वं यस्य तस्य तद्व्याप्यवच्छेदकत्वाभाव इत्येव व्याप्तिः, तथाच निर्धर्मितावच्छेदकव्याप्तिग्रहे घटादिनिरूपितघटसंयोगादिनिष्ठव्याप्तिग्रहेऽपि धूमत्वावच्छिन्नविषयितावच्छेदसत्त्वेऽपि न क्षतिः, यत्पदेन वह्निव्याप्तेरेव ग्रहणादिति वाच्यम्;— साध्याभाववद्वृत्तित्वादिरूपव्याप्तेर्धूमत्वालोकत्वादिरूपहेतुतावच्छेदकभेदेऽप्यभिन्नतया आलोको वह्निव्याप्य इति ग्रहे धूमत्वावच्छिन्नविषयितावच्छेदसत्त्वात्। नचात्र व्याप्तिपदेन हेतुतावच्छेदकघटितहेतु समानाधिकरणेत्यादिव्याप्तिरेव विवक्षिता, किंचिद्धर्मावच्छिन्नविशेष्यकत्वं च नोपादेयमिति वाच्यम्,—तथा सति शरीरजन्यत्वाभाववत्वावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावघटितव्याप्तिता जन्यत्वसामान्याभाववदावच्छिन्नसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावघटित—व्याप्तेर्भिन्नतया शरीरजन्यत्वाभाववत्वघटितव्याप्तिग्रहत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकविषयितानिरूपकतावच्छेदकत्वाभावेन तादृशव्याप्यवच्छेदकताया दुर्वारत्वात्। एवं स्वनाधकाभिमताबाध्यदोषप्रयुक्तभावत्वाभावत्वावच्छिन्नघटितव्याप्तौ तादृशाभावत्वस्यावच्छेदकताया अनपायेनाबाध्यान्तविशेषणघटितस्योपाधित्वं दुर्वारमिति।

यद्यपि केवलदोषजन्यज्ञानविषयत्वे साध्यव्यापकताग्राहकतर्कसत्वेऽप्यबाध्यान्तविशेषणघटिते तदभावेन साध्यव्यापकत्वाभावात्तद्घटितस्य नोपाधित्वमिति। तत्र, शुद्धसत्वविशिष्टसत्त्वयोर्द्वयस्यव्यापकतावदत्रापि तत्सम्भवात्।

एवं अधिष्ठानत्वाभिमतसमसत्ताकदोषजन्यज्ञानविषयत्वमप्युपाधिः, शुक्तिरूप्ये शुक्त्यादिरूपाधिष्ठानसमसत्ताकदोषसादृश्यादिदोषजन्यज्ञानविषयत्वसत्त्वेन साध्यव्यापकत्वात् , घटादौ चाधिष्ठानत्वाभिमतब्रह्मसमसत्ताकदोषाप्रसिद्ध्या उक्तोपाधेः साधनाव्यापकत्वात् ।

यत्तु निरुक्तरूपस्य नोपाधित्वं सम्भवति, ब्रह्मण्यारोपितक्षणिकत्वादौ मिथ्याभूते निरुक्तरूपाभावेन साध्याव्यापकत्वात् , तत्राधिष्ठानभूतब्रह्मसमसत्ताकदोषाप्रसिद्धेरिति । तन्न, अधिष्ठानपदेन स्वजनकज्ञानविषयावच्छेदकस्यैव विवक्षणेन स्थिरत्वावच्छिन्नब्रह्मविषयकाज्ञानकार्ये क्षणिकत्वे स्वजनकाज्ञानविषयावच्छेदकीभूतस्थिरत्वसमसत्ताकदोषजन्यज्ञानविषयत्वसत्त्वेन—साध्यव्यापकतानिर्वाहात् । व्यतिरेकसाधने व्यर्थविशेषणत्वं तु पूर्ववन्निरसनीयम् ।

एवं श्रुतितात्पर्याविषयत्वमप्युपाधिः, तस्य च प्रातिभासिके साध्यव्यापकत्वाद्वियदादिप्रपञ्चे साधनाव्यापकत्वात् ।

यत्तु स्वर्गसाधनत्वादिविशिष्टतया यागादाविव दृश्यमात्रेऽपि मिथ्यात्वादिविशिष्टतया श्रुतितात्पर्यसत्त्वात्तद्विषयत्वाभावस्य साध्याव्यापकत्वान्नोपाधित्वसम्भवः, श्रुतिपरमतात्पर्यविषयत्वाभावस्य च साध्यव्यापकत्वेऽपि तादृशतात्पर्यविषयत्वस्य ब्रह्ममात्रनिष्ठतया तदभावस्य साधनव्यापकत्वान्नोपाधित्वमिति । तन्न, स्वर्गादिसाधनत्वप्रकारकश्रुतितात्पर्यविषयत्वाभावस्यैवोपाधित्वात् । तस्य प्रातिभासिके साध्यव्यापकत्वाद्यागादौ साधनाव्यापकत्वात् ।

एवं प्रातिभासिकत्वमप्युपाधिः । तच्च ब्रह्मान्यविषयकज्ञानबाध्यत्वम् । देहात्मैक्ये ब्रह्मान्यदेहभेदादिविषयकज्ञानबाध्यत्वसत्त्वान्न साध्यव्यापकत्वानुपपत्तिः ।

एवं प्रतिभासमात्रशरीरत्वमप्युपाधिः । तच्च स्वविषयकज्ञानानधिकरणकालासम्बन्धित्वम् । एतेन प्रतिभासमात्रशरीरत्वं यद्यज्ञानविषयानवच्छेदकत्वं तदा शुक्तिरूप्यादेरसत्त्ववादिनां माध्वानां मते शुक्तिरूप्यादेरत्यन्तासत्त्वेन तेषु तदसिद्धेः साध्यव्यापकताभङ्गः, न चात्यन्तासत्त्वादेव न तत्राज्ञानविषयावच्छेदकत्वमिति तदभावस्याक्षतत्वात्साध्यव्यापकत्वमुपपन्नमिति वाच्यम्,—असतस्सत्त्वेन धीवादिनां भवतां तत्सम्भवात्; शशशृङ्गवदिति ज्ञानवच्छशशृङ्गज्ञानस्य युक्तत्वात्, स्वकालत्वव्यापकस्वधीकत्वं प्रतिभासमात्रशरीरत्वमित्युक्तावपि शुक्तिरूप्यादौ तदसिद्धिः, असतस्स्वकालाप्रसिद्धेरिति निरस्तम्; निरुक्तप्रतिभासमात्रशरीरत्वस्यासत्त्ववादिमतेऽप्युपपत्तेरिति ।

इति शेषकुलतिलकस्य यादवाद्रिनिवासरसिकस्यानन्ताचार्यस्य कृतौ न्यायभास्करे दृश्यत्वादिहेतूनां निरुपाधिकत्वभङ्गो द्वादशः ।

न्यायभास्करग्रन्थः समाप्तः ।

